पण्डितराजमारवाडकेसरिश्रीस्नेहिरामजीशास्त्रिस्मारक-
श्रीराजस्थानसंस्कृत-कालेज-ग्रन्थमालायाः-
❁ त्रिशङ्कुसुमम् ❁

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं-

# पातञ्जलं महाभाष्यम्

---

महामहोपाध्यायश्रीनागोजीभट्टविरचितमहा
भाष्यप्रदीपोद्द्योतोद्भासितेन महाम-
होपाध्यायश्रीकैय्यटोपाध्याय-
विरचितेन प्रदीपेन
विराजितम् ।

---

तस्यायम्

## अष्टमोऽध्यायः

---

पण्डितराजश्रीस्नेहिरामशास्त्रिणा पौत्रेण, न्यायाचार्य,-
पण्डितश्रीशिवनारायणशास्त्रिणा पुत्रेण,
श्रीगुरुप्रसादशास्त्रिणा व्याकर
णाद्याचार्येण महता परिश्र
मेण संशोधितं टिप्पण्या
संयोजितश्च ।

---

प्रथम रात्संस्करणम् } १०००     १९३८     { मूल्यम् १॥)

*Publ shed bj —*

**Pandit Nandkishore Shastri Ayurvedacharya,**

RAJASTHAN SANSKRIT COLLEGE GRANTH MALA

**$\frac{2}{1}$ Dharmakoop Meerghat BENARES**



## अत्यावश्यक सूचना—

जन्मना ब्राह्मण क्षत्रिय वैश्य के सिवाय अन्य किसी जाति को इस महाभाष्य के खरीदने व पढ़ने का अधिकार नहीं है। अत जो जन्मना द्विज नहीं हैं वे इसे न खरीदें और न पढ़ें। ब्राह्मण आदि भी इसे शुद्ध होकर शान्तिपाठपूर्वक ही पढ़ें पढ़ायें और अन्त में भी शान्तिपाठ करें। अन्यथा वे प्रत्यवायभाजन होंगे।

*Prnted by —*

**B K Shastri,**

JYOTISH PRAKASH PRESS

**Bishweshwarganj BENARES CITY**

### महाभाष्यस्य आद्यावन्ते चावश्यपठनीया शान्तिमन्त्रा.—

तत्रादौ—ॐ शं नो मित्र शं वरुण । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पति । शं नो विष्णुरुरुक्रम ॥ ॐ नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् २ । ॐ शान्ति शान्ति शान्ति ॥ ॐ ।

[ ॐ वाङ्म मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि । वेदस्य म आणीस्थ श्रुतं मे मा प्रहासीरनेनाऽधीतेनाहोरात्रान्सन्दधाम्यृत वदिष्यामि सत्यं वदिष्यामि तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् २ । ]

ॐ शान्ति शान्ति शान्ति । ॐ नम पाणिनिकात्यायनपतञ्जलिभ्यो मुनिभ्य ॥

ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मण पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

अन्ते च—नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् २ ॐ शान्ति शान्ति शान्ति ॥

॥ श्रीगणेशाय नमः ॥

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं–

# व्याकरणमहाभाष्यम्

उद्द्योतोद्भासितप्रदीपविराजितम् ।

तत्रायम्—

## अष्टमोऽध्यायः

### ॥ तस्य प्रथमे पादे प्रथममाह्निकम् ॥

### सर्वस्य द्वे ॥८।१।१॥

सर्ववचनं किमर्थम् ॥*॥ सर्ववचनमलोऽन्त्यनिवृत्त्यर्थम् ॥ ॥ सर्वग्रहणं क्रियते ॥ [ किं प्रयोजनम् ? ] ॥ 'अलोऽन्त्यनिवृत्त्यर्थम्' । 'अलोऽन्त्यस्य

[प्रदीपः] सर्वस्य द्वे । सर्वशब्दो द्रव्यप्रकारावयवकार्त्स्न्यवृत्तिः । द्रव्यकार्त्स्न्ये यथा–'सर्वस्वं ददाती'ति । प्रकारकार्त्स्न्ये यथा–'सर्वान्नं भक्षयती'ति । सर्वप्रकारमन्नं भुङ्क्ते इति गम्यते । अवयवकार्त्स्न्ये यथा–'सर्वः पटो दग्ध' इति । इह तु पदादीनां विशिष्टार्थानां कार्यित्वेनोपादानाद्द्रव्यप्रकारकार्त्स्न्याऽसंभवादवयवकार्त्स्न्यवृत्तिः सर्वशब्दः । तस्योपादानमलोऽन्त्यनिवृत्त्यर्थं वा स्यादि प्रयोगनिवृत्तये स्थानषष्ठ्यर्थं वा । तत्र वक्ष्यमाणैर्लिङ्गसामर्थ्यादिभिरलोऽन्त्यनिवृत्तिं षष्ठ्यर्थप्रक्लृप्तिं च सिद्धां मत्वा, स्थाने द्विर्वचनस्य द्विःप्रयोगद्विर्वचनस्य च फलभेदमपश्यन् पृच्छति–सर्ववचनमिति । अलोन्त्यनिवृत्त्यर्थमिति । ननु सर्वस्येत्यस्मिन्नसति स्थानषष्ठ्यभावादनुसंहाराऽभावः । स्थाने विज्ञातस्याऽनुसंहार इत्युक्तत्वात् । कथं चान्त्यस्य द्विर्वचनं प्राप्नोति यावता अनेकाल्त्वात्सर्वादेशेन तेन भवितव्यम् ।

[ उद्द्योतः ] सर्वस्य द्वे । ननु 'सर्व'शब्दस्याऽलोन्त्यनिवृत्त्यर्थत्वस्यानुपपत्तिरत आह–सर्वशब्द इति । उपादानादिति । यद्यपि 'नित्यवीप्सयो'रित्यादौ न कश्चिद्विशेष उपादीयते, तथापि विशेषाऽनुपादानादेव सर्वेषां शब्दानां सिद्धमिति द्रव्यप्रकारार्थाऽसम्भव इति भावः । स्थानषष्ठ्यभावादिति । 'नित्यवीप्सयो'रित्यादावपि

विषयो भवन्ती'त्यन्त्यस्य द्विर्वचनं मा भूदिति ॥ क पुनरलोन्त्यनिवृत्त्यर्थे नाऽर्थं सर्वग्रहणेन ? ॥ 'नित्यवीप्सयो रिति ॥ 'नित्यवीप्सयो'रित्युच्यते, न चाऽन्त्यस्य द्विर्वचनेन[1] नित्यता वीप्सा वा गम्यते ॥ इह तर्हि–'परेर्वर्जने' इत्यन्त्यस्याऽपि द्विर्वचनेन[1] वर्ज्यमानता गम्येत । ॥*॥ षष्ठीनिर्देशार्थश्च[2] ॥*॥ षष्ठीनिर्देशार्थं च सर्वग्रहणं कर्तव्यं । षष्ठीनिर्देशो यथा प्रकल्पेत ॥*॥ अनिर्देशे हि षष्ठ्यर्थाऽप्रसिद्धि ॥ * ॥ अक्रियमाणे हि सर्वग्रहणे षष्ठ्यर्थस्याऽप्रसिद्धिः स्यात् ॥ कस्य ? ॥ स्थानेयोगत्वस्य ॥ क पुनरिह षष्ठीनिर्देशाऽर्थेनार्थं सर्वग्रहणेन यावता सर्वत्रैव षष्ठ्युच्चार्यते[4]–'परेर्वर्जने' 'प्रसमुपोद

प्र ] उच्यते। 'परेर्वर्जने'इत्यादौ तावत् षष्ठी विद्यत एव। 'नित्यवीप्सयो'रित्यत्रापि सामर्थ्यलभ्या[5] षष्ठी । यच्चोक्तम्'नेराल्त्वात्सर्वादेशो भविष्यती'ति, हलन्तेष्वेव तत्स्यात् । अजन्तेषु तु पर्यादिष्विकारादेरन्त्यस्य प्राप्नोति । ननु द्वाविकारौ सवस्य स्याताम्, यथा डा आ डा इति प्रश्लेषनिर्देशात्सर्वादेशो डा भवति। उच्यते–द्वाविकारौ श्रुतेरादेशावादेशत्वं प्रतिपद्येते इत्यनेकाल्त्वादादेशोऽलोन्त्यस्य प्राप्नोति । डास्तु प्रश्लेषनिर्देशसामर्थ्याद्विगृहीतरूपः सर्वादेशत्वं प्रतिपद्य सवर्णदीर्घत्वं प्रतिपद्यते । क पुनरिति । नित्यादिरर्थोऽन्त्यद्विर्वचनेन न द्योतयितुं शक्यत इति भाव । अन्त्यस्यापीति । यथाऽन्तरेण द्विर्वचनं परिवर्जनार्थं प्रयुज्यते–'परि त्रिगर्तेभ्य' इति। अत एवोच्यते–'परेर्वर्जने वावचन'मिति। एवमन्त्यस्यापि द्विर्वचनं परवर्जनं प्रतीयेत। षष्ठीनिर्देशार्थं चेति। इदमस्य षष्ठ्यर्थस्य प्रकृत्यर्थमित्यर्थ । कस्येति। 'नित्यवीप्सयोर्ये शब्दस्तस्य द्वे' इति सामर्थ्यात् षष्ठ्यर्थो लभ्यत इति भाव । इतर शब्दमन्तरेणाऽऽनन्तर्यादिरपि सम्बन्ध सामर्थ्याद्विज्ञायेतेति मत्वाह–स्थानेयोगत्वस्येति । क पुनरिति ।

उ ] भाव ।'परे'रित्यादौ स्थानषष्ठीसत्त्वादाह–कथ वाऽन्त्यस्येति। सामर्थ्यलभ्येति। नित्यवीप्सयोर्वर्तमानस्य पदस्य द्वित्वविधानादित्यर्थं । हलन्तेष्विति । तत्र हि–अन्त्यद्विर्वचनेऽपि आदेशस्याऽनेकाल्त्वेनाऽपवादविषयसत्त्वादलोऽन्त्याऽप्रवृत्तौ सर्वस्यैव भविष्यतीति भाव । यथा–'डा–आ' इति लुट प्रथमस्येत्यत्र, यथा च 'युष्मदस्मद्भ्यां ङस' इत्यत्र शित्त्वप्रत्याख्यानाय 'अ–अ' इति प्रश्लेषेण सर्वाऽऽदेशत्वमुक्तं । 'द्वाविकारा'वित्यादि पूर्वपक्ष्याशयवर्णनमात्रम् , षष्ठीनिर्देशस्य वक्ष्यमाणरीत्या सुलभत्वादाह–इहस्येति । आनन्तर्यादिरपीति । वस्तुनो द्वे उच्चारणे इति उच्चारणक्रियानिरूपित

1 'द्विर्वचने पा० 'इत्यत्रान्त्यस्यापि' पा०। 3 इद वार्तिकं प्रायोलुप्तम् । हि क्वचिन्न । 4 श्रैवाऽत्र षष्ठी' पा० । 5 'सामर्थ्याद्' पा० ।

पादपूरणे' 'उपर्यध्यधसः सामीप्ये' 'वाक्यादेरामन्त्रितस्ये'ति ॥

इह न कश्चित् षष्ठी—'नित्यवीप्सयो'रिति ? ॥ ननु चैषैव षष्ठी ॥ नैषा षष्ठी ॥ किं तर्हि ? ॥ अर्थनिर्देश एषः—'नित्ये चाऽर्थे वीप्सायां चे'ति ॥

अलोऽन्त्यनिवृत्त्यर्थेन तावन्नार्थः सर्वग्रहणेन । इदं तावदयं प्रष्टव्यः — 'नित्यवीप्सयोर्द्वे भवत' इत्युच्यते, द्विशब्द आदेशः कस्मान्न भवति ? ॥ आचार्यप्रवृत्तिर्ज्ञापयति—'न द्विशब्द आदेशो भवती'ति—यदयं 'तस्य परमाम्रेडितम्' 'अनुदात्तं चे'त्याह ॥ कथं कृत्वा ज्ञापकम् ? ॥ द्विशब्दोऽयमेकाच्, तत्रैकाच्त्वात्तस्य परमाम्रेडितमनुदात्तं चेत्येतन्नास्ति । पश्यति त्वाचार्यो—'न द्विशब्द आदेशो भवती'ति, ततस्तस्य परमाम्रेडितमनुदात्तं चेत्याह ॥

---

प्र ] षष्ठी सर्वत्र विद्यत इति भावः । ननु चैषैवेति । नित्यार्थवचनः शब्दो नित्यो, वीप्सार्थवचनश्च वीप्सेत्याश्रीयत इति भावः । अर्थनिर्देश इति । प्रयोक्तृधर्मो वीप्सा यथा आबाधो, नत्वभिधेयधर्मः । यद्वक्ष्यते वीप्सायुक्तो वक्ता भवतीति । वीप्सायाश्चाऽर्थत्वे नित्यशब्दोऽप्यर्थवृत्तिरेव प्राप्तो, द्वन्द्वनिर्देशाद्भिन्नविभक्तित्वाऽयोगात् । अलोऽन्त्यनिवृत्त्यर्थेनेति । ननु च नित्यवीप्सयोरित्यर्थाश्रयणेन पूर्वमेवालोऽन्त्यविधिर्निवारितस्तत्किमर्थं नित्यवीप्सयोरित्युपादीयते, परैर्वर्जने इत्यादि ह्युपादेयम् । प्रकरणोपलक्षणार्थं वा सर्वेषु वा सूत्रेषु परिहारस्य तुल्यत्वाददोषः । कथं पुनर्द्विशब्द आदेशः सम्भाव्यते यावता 'ग्रामो ग्राम' इत्यस्मिन्नर्थे प्रतिपाद्ये द्विशब्दो न प्रवर्त्तते । पराभिप्रायेणैतदुच्यते यथा भवान् सामर्थ्यादिन्यायत्यागेन शास्त्रमद्धावमानेनाऽलोऽन्त्यविधिं मन्यते तथा 'स्वं रूपं शब्दस्ये'ति शास्त्रप्रामाण्याद्द्विशब्दः प्राप्नोति । न्यायाश्रये तु स्थानषष्ठीवदलोऽन्त्यविधिर्न भविष्यति । आचार्यप्रवृत्तिरिति । न्यायसिद्धस्य लिङ्गदर्शनम् । नहि द्विशब्द आदेशो ग्रामादिशब्दस्यार्थं वक्तुं समर्थ इति न प्रवर्तते । 'नाम्रेडितस्यान्त्यस्य तु वा'

---

उ ] कर्मत्वमेव प्रत्याय्येनेति बोध्यम् । ननु नित्यादिशब्दयोरप्यर्थत्वादेवैव षष्ठ्यत्यनुपपन्नमत आह नित्यार्थेति । भिन्नविभक्तिकं वेति । वीप्साया विषयसप्तमी, नित्यात्तु षष्ठ्येवेत्यर्थः । ननु चेति । नित्यवीप्सयोरर्थयोर्द्वे भवत इत्यर्थे स्थानषष्ठ्यभावादलोऽन्त्यस्याऽप्रसङ्ग इति भावः । परिहरति—प्रकरणेति । परिहारस्येति । वक्ष्यमाणस्येत्यर्थः । इत्यस्मिन्नर्थे इति । एतदर्थं तत्र हि वीप्साप्रत्ययो न तु द्विशब्दत्वे भावः । सामर्थ्यादिन्यायेति । आदिना इत्यत्र सङ्ग्रहः । सर्वस्यैतस्य सर्वशब्दस्येत्यर्थवारणाय

---

१ तस्यैवोपन्यायेनेदमेवमन्वत्राप्यन्वेति । २ वाप्स वप्सन् पा० ।

यदि तर्हि न द्विशब्द आदेशा, भवति के तहीदानीं द्वे भवत ? ॥ द्विशब्देन यदुच्यते ॥ किं पुनस्तत् ?॥ द्विशब्दोऽयं सङ्ख्यापदं, सङ्ख्यायाश्च सङ्ख्येय मर्थं । सङ्ख्येये द्वे भविष्यत ॥ के पुनस्ते ? ॥ पदे वाक्ये मात्रे (वा) ॥

तयदा तावत्पदे वाक्ये वा तदाऽनेकाल्त्वात्सर्वादेश सिद्ध । यदा तावन्मात्र अपि तदा'ऽनेकाल्शित्सर्वस्ये'ति सर्वादेशो भविष्यति ॥

यदा तर्ह्यर्द्धमात्र तदा सर्वादेशो न सिध्यति ॥ नैष दोष । [ तत्रापि सिद्ध ]। न चार्द्धमात्र द्विरुच्येते ॥ किं कारणम् ?॥ इह व्याकरणे यत्सर्वा-ऽल्पीयान् स्वरव्यवहार स मात्रया भवति । नाऽर्द्धमात्रया व्यवहारोऽस्ति, तत्राऽर्द्धमात्रे न भविष्यत ॥ एवमपि कुत एतत्–'पदे द्वे भविष्यत'इति, न पुनर्वाक्ये स्यातां मात्र वा ? ॥ 'नित्यवीप्सयोर्द्वे भवत' इत्युच्यते न च वाक्यद्विर्वचनेन मात्राद्विर्वचनेन वा नित्यता वीप्सा वा गम्यते ॥

प्र ]'नित्यमाम्रेडिते डाची'त्येतदपि लिङ्ग द्रष्टव्यम्। यदि तर्हीति पृष्ट द्विशब्देन यदुच्यतइ त्युत्तरे दत्तेऽपि सामान्याभिधानाद्विशेषा दर्शनमिति पृच्छति–किं पुनस्तदिति । सङ्ख्येयमर्थं इति । अभिधेयमित्यर्थ । यदुच्यते–'आदशभ्य सङ्ख्या सङ्ख्येये वर्त्तते तत उत्तर सङ्ख्याने सङ्ख्येये च'ति । पदे इति । शब्दानुशासनप्रस्तावा च्छब्दस्योपन्यास । यदा तावन्मात्रे इति । यदुक्त–'द्वावि कारौ इतीकारादेशावेकारादेशो ऽन्त्यस्य प्राप्नोता'ति, तद्युक्त,न त्यप्रवृत्तयोरेकादेश-शास्त्रप्रवृत्तिरस्ति, प्रवृत्तिकाले चाऽनेकाल्त्वात्सर्वादेशत्वमिति नास्त्यन्त्योऽल्-विधि । यदा तर्हीति । परिमाण्देकारस्य द्व अर्धमात्रे अ ग्रहणनाऽर्द्धमात्राया अग्रहणादनेकाल्त्वाऽभावात्प्राप्नुत । इहेति । विशिष्टस्यार्द्धमात्राद्वयस्योच्चारणप्रयोगादशक्य आदेश कर्तुम् । 'तस्यादित उदात्तमर्द्धह्रस्व'मित्यनेन तु ह्रस्वादिवर्णस्थाया अर्द्धमात्राया गुणाख्यान क्रियते। न च वाक्यद्विर्वचने इति।

उ ]शापकात्तस्माह नाम्रेडितस्यान्त्यस्येति। भाष्ये-सङ्ख्यापद–सङ्ख्याप्रवृत्तिनिमित्तक पदम् । सङ्ख्यायाश्चेति । तत्प्रवृत्तिनिमित्तकपदस्येत्यर्थ । अत उत्तर–दशभ्य उत्तर । विंशत्यादय इत्यर्थ । ननु सङ्ख्येयस्याऽनन्तत्वात्पदादीनामेवोक्त्याऽयुक्ताऽत आह–शब्दानुशासनेति । प्रकारा–र्थ । भाष्ये–अपि तदेति। तदापीत्यर्थं । अत्र 'मात्रा' शब्दो वर्णोपलक्षणम्। प्राप्नुत इति। 'अन्त्यस्ये'ति शेष । भाष्य–व्याकरणे यत्सर्वेति। 'यदिति सामान्ये नपुंसकम्। 'य' इति वा पाठ । गुणाऽऽख्यान क्रियत इति। न तु

१ सङ्ख्येये द्वे' पा० । २ 'सर्वस्यादेशा' पा० । ३ 'यदा मात्र पा० । ४ 'भवति' पा० । ५ अयं पाठ क्वचित्। ६ सर्वोऽल्पीयान् पा० । ७ द्विवचन पा० ।

पर्यायनिर्देशार्थमेव तर्हि सर्वग्रहणं कर्तव्यम् ॥

॥*॥ न वा पदाधिकारात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'पदाधिकारात्' । 'पदस्ये'ति प्रकृत्य द्विर्वचनं वक्ष्यामि ॥*॥ तच्च समासतद्धितवाक्यनिवृत्त्यर्थम् ॥*॥ तच्चावश्यं पदग्रहणं कर्तव्यम् ॥ [किं कारणम् ?॥ 'समासतद्धितवाक्यनिवृत्त्यर्थम्'][1] । समासनिवृत्त्यर्थं तद्धितनिवृत्त्यर्थं वाक्यनिवृत्त्यर्थं च ॥ समासनिवृत्त्यर्थं तावत्—सप्तपर्णः । अष्टापदम्[2] । तद्धितनिवृत्त्यर्थम्—द्विपदिका त्रिपदिका । माषशः कार्षापणशः । वाक्यनिवृत्त्यर्थम्—ग्रामे ग्रामे पानीयम् । माषं माषं देहि [इति] ॥

अथ क्रियमाणेऽपि वै पदग्रहणे 'समासनिवृत्त्यर्थ'मिति कथमिद

प्र.] नित्यत्वादर्थप्रतिपादनाय तत्प्रतिपादनसमर्थः शब्दः प्रयुज्यते, 'स्थानेऽन्तरतम' इत्युपस्थानाच्च शब्दतोऽर्थतश्चान्तरतमे एव द्वे पदे आदेशौ भवतः । 'परेर्वर्जने' इत्यादौ तु पर्यायनिर्देशमनिच्छताऽपि शब्दः[3] पर्यायानेव सह्यानाचष्ट इति वाक्ये माने पदे अपि ये ते चिन्त्य प्रवर्तेते । न वेति । शब्दान्तरं पदान्तमुपादेयम्, को विशेष इति यदाह—तच्चेति । सप्तपर्ण इति । सप्तसङ्ख्यानि पर्णानि वीप्स्यन्ते न तु तद्वान् वृक्ष इति वीप्सायामेकत्वस्याऽनन्तर्भावात्प्रागेव विभक्तेर्द्विर्वचनं प्राप्नोति—सप्तसप्तपर्ण इति । पदाधिकारात्तु न भवति । द्विपदिकेति । द्वित्वसङ्ख्यायुक्तः पादार्थो वीप्स्यते इति वीप्साया स्वार्थिकत्वल्लक्षणयोर्लिङ्गसङ्ख्ययोरनन्तर्भावात् प्राक्तद्धितोत्पत्तेः समासे कृते पदत्वाऽभावाद्विर्वचनाऽभावः । ग्रामे ग्रामे पानीयमिति । वाक्यस्याऽपदत्वाद्विर्वचनाऽभावः । अथेति । 'सप्त

उ.] सा)पृथगुच्चारणविषयेति भावः । ननु यत्किञ्चिच्छब्दद्वयेनैवाऽर्थः स्यादत आह—अन्तरतमे एव द्वे पदे इति । द्वित्वं पदे न तु वचने । नाद्दश्यबोधनाऽसामर्थ्येनानन्तरतमत्वादिति भावः । नित्यत्वेऽप्यनयोर्थः शब्दस्तत्र पष्ठा स्थानषष्ठा मन्यते । पर्यायनिर्देशेति । अन्यथाऽस्येति भावः । ये केचिदिति । 'पदे भवत' इत्यनेन सम्बध्यते । को विशेष इति । पष्ठ्यन्तशब्दान्तरोपादाने विशेषः पृष्टो न्यायः । एकत्वस्यानन्तर्भावादिति । वीप्साविषयस्यार्थबोधसमये वृक्षार्थत्वस्याऽननुभवादित्यर्थः प्रागेव द्वित्वमित्यर्थः । पृथगेव विभक्तेरिति । विभक्तेः पृथग्भूतस्य । विभक्तिरहितस्येत्यर्थः । प्रागेव विभक्ते'रिति तु युक्तः पाठः । पदाऽधिकारे तु 'सप्तपर्णः' इति पदवाच्यस्य वीप्साविषयत्वाऽभावान्न दोषः । पादार्थ इति । पादशब्दार्थ इत्यर्थः । पदत्वाभावादिति । अन्तर्वर्तिन्या अनुत्पत्तेः पूर्वमेवाऽत्र तद्धितः इति भावः । भाष्ये—'द्विपदिका' निर्देशेऽनुवर्तनीय—'माषशः कार्षापणशः' इत्यपाठः । पदग्रहणेनाऽपि तत्र निवृत्तेरशक्यत्वात्, सुबन्तत्वादपि पदत्वात् ।

1 इद वर्तितम् । 2 'अष्टापद' पा० । 3 'पर्यायशब्द' पा० । 4 'रत्यादि' पा० ।

कार्षापणश इत्यत्र प्राप्नोति ॥ अथ विज्ञायते—तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति, द्विपदिका(:)त्रिपदिका इत्यत्रापि प्राप्नोति ॥

तथा 'वाक्यनिवृत्त्यर्थ'मिति कथमिदं विज्ञायते वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति । आहो स्विद्वाक्ये निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति ? ॥

*किं चातः ?*॥ यदि विज्ञायते—वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति,—यदि वाक्यं वीप्सायुक्तं, भवितव्यमेव द्विर्वचनेन । अथाऽप्यवयव ,—भवत्येव । तदेतत्क्रियमाणेऽपि पदग्रहणे [1]ओल्हनविशीर्णं भवति, किंचित्सङ्गृहीतं किंचिदसङ्गृहीतं [च][2] । ॥*॥ सगति[3]ग्रहणं च ॥*॥ सगतिग्रहणञ्च कर्त्तव्यम् । प्रपचति—प्रपचति, प्रकरोति—[4]प्रकरोतीति ॥

किं पुनः कारणं न सिध्यति ? ॥ न हि सगतिकं पदं भवति ॥

समासनिवृत्त्यर्थेन तावन्नार्थं पदग्रहणेन । समासेनोक्तत्वाद्वीप्साया द्विर्वचनं न भविष्यति ॥ किं च भोः 'समासो वीप्साया'मित्युच्यते ? ॥

---

प्र ] मापश इति । प्रत्ययलक्षणेन सुबन्तं, तद्धितान्तं च । वाक्यं वीप्सायुक्तमिति । वाक्यार्थस्य वीप्सायोगा(ऽभावा)द्वीप्साग्रहणं द्विर्वचननिमित्तोपलक्षणं तेन *'प्रपचति प्रपचती'ति नित्यतायां वाक्यस्य द्विर्वचनं भवत्येव* । अथेति । *यदा* ग्रामार्थस्य वीप्सा तदा 'ग्रामे ग्रामे पानीय'मिति भवति । यदा पानीयस्य तदा 'ग्रामे पानीयं पानीयं स्या'दिति भवति । तदेतदिति । अतिव्याप्तिर्न कथंचित्परिहर्तुं शक्यते । सगतिग्रहणं चेति । पदाधिकारे क्रियमाणे सगतिग्रहणमधिकं कर्तव्यम् । भाष्यकारः पदाधिकारेण विनापि समासादिनिवृत्तिप्रतिपादनायाह—समासेनेति । 'सप्तपर्ण'इति हस्तिशब्दः परिगृहीतावयवार्थविशेषो वृक्षविशेषे वर्तत इत्यर्थः । किं च भो इति । ननु न वचनादर्थं शब्दः प्रत्याययति

---

उ ] त्रापीति । अपिना द्विपदिकाभ्यां माषश इत्यादौ च दोषः । वीप्साऽयोगादिति । वीप्सयाऽयोगादित्यर्थः । वाक्यस्य—पदसमुदायस्य । वीप्सायुक्तमिति भाष्यस्य वीप्साप्रदर्शितसूत्रोपात्तार्थयुक्तमित्यर्थ इति भावः । भाष्ये—अथाऽप्यवयव इत्यादिमतमीसमानं दूषणम् । एतत्प्रयोजनवचनम्—अल्पनविशीर्णं । तद्व्याचष्टे—किंचिदिति । किंचिदसङ्गृहीतमिति । किंचिद्व्यावर्त्यं न व्यावर्तितमित्यर्थस्तदाह अतिव्याप्तिर्न कथंचिदिति । वाक्यविषये चाऽव्याप्तिवारणाय वचनान्तरमावश्यकमित्याह भाष्ये—सगतीति । तद्व्याचष्टे—पदाधिकारे इति । परिगृहीतावयवार्थेति । अनेन योगरूढोऽयमिति ध्वनि

---

१ त्वादेन पा० । २ च क्वचित् । ३ पद सर्वत्र पाठः पुस्तक । ४ इति क्वचित् ।

न खलु वीप्सायामित्युच्यते गम्यते च सोऽर्थः ॥ तत्र किम्[2] ? ॥ उक्तं समासेनेति कृत्वा द्विर्वचनं न भविष्यति । यत्र च[3] समासेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा—एकैकविचिता अन्योन्यसहाया इति ।

अथ वा यदत्र वीप्सायुक्तं नाऽद्य प्रयुज्यते ॥ किं पुनस्तत् ? ॥ पर्वणि पर्वणि सप्त पर्णान्यस्य, पङ्क्तौ पङ्क्तावष्टौ पद्मान्यस्येति ॥

तद्धितनिर्वृत्त्यर्थेन चाऽपि नार्थः पदग्रहणेन । तद्धितेनोक्तत्वाद्वीप्साया द्विर्वचनं न भविष्यति । तद्धितः खल्वपि 'वीप्साया'मित्युच्यते । यत्र च तद्धितेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा—एकैकशो ददातीति ॥

---

प्र ] तर्हि, स्वसामर्थ्यात् । एवं मन्यते वाक्ये द्विर्वचनेन वीप्सा व्यज्यते—'सप्त सप्त पर्णान्यस्ये'ति, एवं समासेऽपि वीप्साप्रतिपादनाय द्विर्वचनस्य प्रसङ्गात् प्रतिषेधो विधेयो—'नित्यवीप्सयोरसमासे' इति । यथा वक्ष्यते—'परेरसमासे' इति । न खल्विति । रूढिशब्दत्वादस्याक्षिप्तव्याप्तोऽवयवार्थः । यथा 'त्रिदशा' इत्यादावाक्षिप्तसुजर्थः । अन्ये हि वाक्यधर्मा अन्ये वृत्तिधर्माः । तत्र समासेनोक्तत्वादित्यस्यायमर्थः—समासेनाभिव्यक्तत्वादिति । यत्र चेति । यो न रूढिशब्दः । एकैकविचिता इति । एकैकेन विचिता । अन्योन्यसहाया इति । अन्योन्यस्य सहाया इत्यर्थः । अत्र कर्मव्यतिहारो द्विर्वचनद्योत्यः । अथ वेति । न चाऽप्रयुज्यमानस्य द्विर्वचनसम्भवः, गतार्थत्वाच्च पर्वादिशब्दस्याऽप्रयोगो, रूढिशब्दत्वाच्च गतार्थत्वम् । तद्धितेनेति । तद्धितस्य स्वार्थिकत्वादभिव्यक्तिर्वीप्साया अवसेया । एकैकश इति । केचिदाहुः—अल्पार्थोऽप्येकशब्दोऽस्ति तस्य वीप्सायां द्विर्वचने कृते 'बह्वल्पार्था'

---

उ ] नन् । ननु चेति । तथा हि सति समर्थसूत्रस्थभाष्यविरोध इत्यर्थः । प्रतिषेधो विधेय इति । सप्तपदस्य पदत्वसत्त्वात्तद्द्वयेत्यनेन वारणमिति भावः । रूढीति । अनेनाऽवयवार्थानां वीप्साविशिष्टस्यार्थस्य बोधकत्वे निमित्तं दर्शितम् । नन्वेवं वाक्येऽपि द्विर्वचनं न स्यादत आह—अन्ये हीति । वृत्तिविषयागमनेताऽऽद्य स्वभाव इति भावः । नन्वेवमपदेनोक्तत्वेऽपि समासेनोक्तत्वादित्यसङ्गतमत आह—अभिव्यक्तत्वादिति । अवयवद्वारेत्यर्थः । 'वीप्सोक्ते'त्यस्य व्यापकत्वानुक्तमित्यर्थः । कर्मव्यतिहार इति । मध्यस्थत्वेऽप्यानन्दसुखलक्षणमिति भावः । ननु यदि पर्वाद्यर्थो वीप्साविशिष्टोऽवगम्यते तर्हि तत्प्रयोगोऽपि स्यादत आह—गतार्थत्वाच्चेति । पर्वपर्वाधिकरणकसप्तपर्णसम्बन्धिनि विशिष्टे सप्तच्छदाकारादिति भावस्तदाह—रूढिशब्दत्वाच्चेति । भाष्ये—तद्धितेनोक्तत्वादिति । न च 'नित्यवीप्सयो'रित्यस्य 'येन नाप्राप्ति'न्यायेन तस्य बाधात्कथमत्र द्विर्वचनप्राप्तिरिति वाच्यम्, शसन्तस्य प्राप्त । तस्य

---

१ अथ कश्चित्र । २ 'तत्रेत्य- समासेन' पा । ३ 'यत्र च' इत्य नु' पा ।

द्वाक्यद्विर्वचने माभूत्—मह्य ग्रहीष्यति—मह्यग्रहीष्यति, मामभिव्याहरिष्यति—मामभिव्याहरिष्य[तो]ति ॥

कथ चाऽत्र द्विर्वचनम् ? ॥ छान्दसत्वात् ॥

स्वरोऽपि तर्हि च्छान्दसत्वादेव न भविष्यति ॥ उत्तरार्थमेव तर्हि पदग्रहण कर्त्तव्य,'पदस्य पदा'दिति वक्ष्यति,तत्पदग्रहण न कर्त्तव्य भवति॥

सर्वग्रहणमपि तर्ह्युत्तरार्थम् । 'अनुदात्त सर्वमपादादा'विति वक्ष्यति तत्सर्वग्रहण न कर्त्तव्य भवति ॥ उभय क्रियते तत्रैव ॥

इहार्थमेव तर्हि षष्ठीनिर्देशार्थमन्यतरत्कर्त्तव्य, षष्ठीनिर्दिष्टस्य स्थाने

---

प्र ] प्रतिपादनाय पदसमुदायस्य द्विवचनमित्यर्थः । वीप्सयाऽत्र नित्यत्व लक्ष्यते ।

मह्यमिति । 'आबाधे च'ति द्विर्वचनमित्याहु । कथमिति । आबाधस्याऽसप्रत्ययादर्थान्तरस्य च द्विर्वचननिमित्तस्याऽभावाद्विर्वचनाऽप्रसङ्ग । स्वरोऽपीति । अनुदात्तत्वाऽभावे प्रकृतिस्वरो भवति । उत्तरार्थमिति । 'सर्वस्ये'त्यपनीय 'पदस्ये'ति क्रियमाणे मण्डूकप्लुतिन्यायेन द्विर्वचनप्रकरणमुल्लङ्घ्योत्तरत्रोपतिष्ठते । इहार्थमेवेति । ननु सामीप्यादिसम्बन्धप्रतीतिनिवारणमप्यन्यतरोपादानस्य प्रयोजन कस्मान्न भवति ? । उच्यते । 'नित्यवीप्सयो'रित्यर्थनिर्देशेन शब्दस्याक्षेपात्—'नित्यवीप्सयोर्यो वर्तते शब्दस्तस्य द्वे भवत'इति प्रक्रियावाक्यस्योपगमनाद्विशिष्टषष्ठ्यर्थावगमात्सामीप्यादिसम्बन्धप्रतीत्यभाव सिद्ध । पक्षद्वयसम्भवे तु

---

उ.] नन्वाभीक्ष्ण्यरूपनित्यत्वस्य क्रियाधर्मत्वात्तदात्मके क्रियावाचि वाक्ये कथ प्रत्युदाहरणस्य द्वित्वमत आह—अद्यादीनि । तिङ्क्षु वीप्साया असम्भवादाह—वीप्सयेति । एवञ्च पदग्रहणाऽभावे सर्वनिकग्रहण सुतरा व्यर्थमिति तात्पर्यम् । उल्लङ्घ्येति । अत्र पञ्चाऽभावनाऽसम्बन्धादित्यर्थ । न च नित्ये द्वित्व धातुमात्रस्य मा भूदिति पदस्येत्यावश्यक, किञ्च सुप्प्रत्ययान्तेऽपि द्वित्व वारयितु तत् क्रियाऽऽबाधादिविषये वाक्यद्वित्वस्थापूर्त्यर्थमिति वाच्य, धातुद्वित्वेन नित्याद्यर्थानवगते । किञ्च सुबादिभि स्वार्थे परिपूर्णस्यैव लोके प्रयुज्यमानस्य शब्दादुपस्थितस्य बहिर्भूतवीप्सादियोग इति न तद्विर्वचनप्रसक्ति । आबाधविषयवाक्याऽसम्भवाच्च । अत एव भाष्ये छान्दसत्वेन वाक्ये द्वित्वमुक्तम् । न च पदस्येत्यस्याऽभावे गन्दर्भस्य कौटिल्यमात्रे मात्राकाशो यद्वा कौटिल्यपौनःपुन्योभयविवक्षाया परेण द्वित्वेन बाध्येत, एव भृशार्थपौनःपुन्योभयविवक्षायामपि । तत्सत्त्वे तु बहिरङ्गत्वाद्विर्वचनस्य पदेनैव । अत एव 'सरितो व ठिसूत्रे' ल्लतठतातीना द्वित्वस्य च भमत्व वक्ष्यति भाष्यकार इति वाच्यम्, एव (विधे) विषये उभयविवक्षैव नाऽनभिधानादित्याशयात् ।

ननु सामीप्यादीनि । अस्या शङ्काया बौद्धिमत्र इति चिन्त्यम् । विशिष्ट

द्विर्वचनं यथा स्याद्द्विःप्रयोगो मा भूदिति ॥ किं च स्यात् ?॥ 'आम्पचमि पचसि देवदत्ता३'। 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येकान्तरता

प्र ] षष्ठीनिर्देशेन 'षष्ठी स्थानेयोगे'ति परिभाषोपस्थानाद्द्विःप्रयोगो निवर्तते। 'द्वे'इत्येतावत्युच्यमाने सङ्ख्येयमुच्चारणं यदपेक्षते-'शब्दस्य द्वे उच्चारणे भवत' इति,-तदा शब्दस्य क्रियायाश्च स्थान्यादेशभावाऽयोगाद्द्विःप्रयोगो द्विर्वचनमिति पक्षः। यदा तु शब्दस्य सङ्ख्येयं तदा 'द्वे शब्दरूपे एकस्य प्रसङ्गे भवत' इति स्थाने द्विर्वचनं विज्ञायते। अथैकाचो द्वे प्रथमस्येत्यत्र षष्ठीनिर्देशात् स्थाने द्विर्वचनं कस्मान्न भवतीति। 'अभ्यासाच्चे'त्यनेनाऽभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वविधानाज्ज्ञापकात्। न हि स्थाने द्विर्वचनेऽभ्यासादुत्तरो हन्तिः सम्भवति, शब्दान्तरत्वादादेशस्य। स्थानिवद्भावादपि समुदायो हन्तिग्रहणेन गृह्यते न तु तदवयवः। एकान्तरतेति। आवृत्तिभेदनिबन्धनया द्वित्वसङ्ख्यया स्वाश्रयस्यैकत्वस्य निवर्तनात्। तथा चोक्तम्-"एकापनेका ग्रहणेषु चावृत्तिसङ्ख्यानादिति ऋषिसहस्रमेका कपिला दत्त्वा सर्वे ते सहस्रदक्षिणा भवन्तीस्तत एकदक्षिणा आनीयन्तामित्युक्ते सहस्रदक्षिणत्वान्न त आनीयन्त'। तत्र आम्शब्दो निपातत्वादाद्युदात्तः। एतस्य 'पचमि'शब्दस्य 'तिङ्ङतिङ' इति निघातो, द्वितीयस्याऽनुदात्तं चे'त्यामन्त्रितस्य पदात्परस्य निघाते प्राप्ते, प्रतिषिद्धे, 'आमन्त्रितस्य च'त्याद्युदात्तत्वम्। प्लुतस्याऽप्युदात्तत्वम्। अथ स्थाने द्विर्वचने कथमेकान्तरता यावतैकस्य स्थाने द्वौ शब्दावादेशौ विधीयेते[1]। उच्यते-

उ ] षष्ठ्यर्थेति। स्थानस्य कर्मत्वरूपो वा यथ। कथं पुनरयं तदीयदर्शनेन द्विःप्रयोग निश्चित इत्यत आह-पक्षद्वयसम्भवे त्विति। तदभावे पक्षद्वयमसमुपपादयन्ति-द्वे इति। शब्दस्येत्युच्चारणक्रियापेक्षया कर्मषष्ठीति भावः। यदा त्विति। पर तु कारकषष्ठ्यसम्भव इतरस्या अन्याय्यत्वेन द्विःप्रयोग एव स्यात्, तदर्थं सर्वस्येत्याद्युक्तिः। तदुक्ते तु तत्सामर्थ्यात्स्थानषष्ठीति भावः।

ननु 'पचमि'शब्द एक एव, उच्चारणमेव तु भिद्यत इति द्विःप्रयोगे त्वेकान्तरता सिद्धेत्यत आह-आवृत्तीति। उदाहरति। अ इ उ णित्यत्र। न ते अर्थ दन्ते इत्यत्रान्वयो ग्रन्थः। प्रतिषिद्धे इति। 'आम एकान्तर'मित्यनेनेत्यर्थः। आमन्त्रितस्य चेति। षष्ठ्यर्थं। प्लुतस्याप्युदात्तत्वमिति निघातानुदात्त पदमित्यस्याऽप्रवृत्त्या तदनुदात्तत्वं निघातस्याऽभावादिति भावः। ननु पुनः शब्दस्याऽसत्त्ववाचित्वेन कथं भावसम्बन्धयोगे

१ षष्ठीनिर्देशेनेति क्वचित्।

न स्यात्। इह च 'पौनःपुन्यं' 'पौनःपुनिकः' इति,—अप्रातिपदिकत्वा-त्तद्धितोत्पत्तिर्न स्यात्॥

यदि तर्हि स्थाने द्विर्वचनं—राजा राजा वाग्वाक्,—पदस्येति नलोपादीनि न सिध्यन्ति॥ इदमिह सम्प्रधार्यं—द्विर्वचनं क्रियतां नलोपादीनीति, किमत्र कर्तव्यम्?॥ परत्वान्नलोपादीनि॥ पूर्वत्राऽसिद्धे नलोपादीनि। सिद्धाऽसिद्ध-

---

प्र ]एकपदादेशत्वात् स्थानिवद्भावादेव पदत्वम्। पौनःपुन्यमिति। पुनः पुनर्भवितरि वर्तमानात् 'पुनः पुन'शब्दाद्भावे प्रत्ययो, यथा नानात्वमिति नानाभूतैर्नानाशब्दात्। पौनःपुनिक इति। 'पुनः पुनर्भव' इति 'कालाट्ठञ्'। तत्र द्विःप्रयोगे पदस्य विज्ञायमाने वीप्स्यमानार्थतावित्स्यादर्थवत्त्वेऽप्यर्थवत्समुदायस्य समासग्रहणान्नियमार्थादप्रातिपदिकत्वम्। स्यादेतत्—अनुत्पन्न एव सुपि पुनःशब्दस्य नित्यतानुवृत्तक्रियाप्रधानस्याऽव्ययस्य द्विःप्रयोगो विधास्यते, ततो सुबन्तसमुदायत्वाद्व्यावृत्तं प्रातिपदिकत्वं, यथैकशेषे सरूपप्रातिपदिकसमुदायस्य। तच्च न। द्विर्वचनस्य नित्यत्वादर्थापेक्षत्वाद्बहिरङ्गात्सुबुत्पत्तेरर्थमात्रापेक्षयाऽन्तरङ्गत्वात्। स्थाने द्विर्वचने तु स्थानिवद्भावात्प्रातिपदिकत्वम्। ननु स्थान्येव सुबन्तत्वान्न प्रातिपदिकम्। नैतदस्ति। सुब्लुकि प्रत्ययलक्षणेनाऽप्रत्यय इति प्रातिपदिकसंज्ञानिषेधो, 'न ङिसम्बुद्ध्यो'रिति नलोपनिषेधाल्लिङ्गात्। अन्यथा प्रातिपदिकत्वाऽभावान्नलोपस्य प्राप्त्यभावात्प्रतिषेधो न कर्तव्यः स्यात्। राजाराजेति। पदस्य स्थाने समुदाय आदेशः सोऽपि न तदन्यथैव इति पूर्वस्य नलोपाद्यसिद्धिः। अन्तरङ्गबहिरङ्गान

उ ]अथ—पुनः पुनर्भवितरीति। वृत्तिविषये इति भावः। पुनःशब्दस्येति। आकृतिगणत्वात्स्वरादिपाठात्स्वरादित्वादित्यर्थः। नित्यतानुवृत्तक्रियाप्रधानस्येति। नानाक्रियावत्त्ववृत्तेरित्यर्थः। अतएव तत्र ध्वनानिसिद्धिः। यथैकशेषेति। सरूप प्रातिपदिकसमुदायादेकस्या विभक्तौ परत एकशेष इति पक्षे इदम्। अन्तरङ्गत्वादिति। स्वत्व द्वन्द्वत्वाद्यत्र सङ्घाते पूर्वो भाग पदमिति नियतानिर्दिष्टत्वस्याप्रवृत्तिरिति भाव। नत्र पदत्वस्याऽर्थवत्त्वेऽपि न क्षतिः, लोके तदानुपूर्वीकत्वेनापि प्रयुज्यमाना दर्थस्यान्येनाऽऽदस्याऽप्यर्थवत्त्वात्। दोषवृत्तिन्तु 'दार्ढ्यादिवदारणाया। सुब्लुकीति। ननु प्रातिपदिकत्वेऽपि स्थप्रकृतिस्तुबन्तत्व तुल्यं, सुबन्तात्तद्धितो नोत्पद्यत इति हि सिद्धान्त इति चेन्न तत्त्वस्याप्यनिर्देशेन साम्यात्। प्रत्ययग्रहणपरिभाषया 'यस्मात्' इत्यस्य सत्त्वेन प्रकृते स्थानिप्रातिपदिकग्रहणेऽसुबन्तत्वस्याऽपि सम्भवात्। इति पूर्वस्येति। उत्तरस्य

१ 'पौनःपुनर्भव'मिति पा०।

मेव यच्छित्य, न चैनच्छित्य समानपदमेव ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गस्यते ? ॥ 'समानग्रहणसामर्थ्यात्' । यदि हि यत्समानं यच्चाऽसमानं च तत्र स्यात्समानग्रहणमनर्थकं स्यात् ॥

अथ वा पुनरस्तु द्वि प्रयोगो द्विर्वचनम् ॥ ननु चोक्तम्—"आम्पचसि पचसि देवदत्ता ३ !—आम एकान्तरमामन्त्रितमनन्तिके इत्येकान्तरता न प्राप्नोती"ति ॥ नैष दोषः—सुप्तिङ्भ्यां पदं विशेषयिष्यामः । 'सुप्तिङन्तं पदं' । यस्मात्सुप्तिङ्विधिस्तदादि सुप्तिङन्तं च [ पदम् ] ॥ ननु चैवं तस्मादेवात्र

प्र ] रेफ पूर्वमन्तरगाऽपि नकारस्य प्रयोगान्तर्वदा समानपदस्थत्वाऽभाव । अथवा स्थानिवद्भावादेकपदत्व,तत्त्वतस्तु पदद्वयात्मक आदेश । समानग्रहणमिति। 'रषाभ्यां नो णः पदे' इत्येव वक्तव्य, तत्राऽपदस्थयोर्निमित्तनिमित्तिनोर समनाद्गुणे सङ्ख्याया विवक्षितत्वाच्चैकपदस्थत्वे सिद्धे समानग्रहणं नियमार्थं माश्रीयत इरत्न णत्व न भवति । यस्मात्सुप्तिङ्विधिरिति । अर्थः प्रत्ययसामान्यान्म एव पत्ययाद्द स एव च तिङिति य पूर्वस्माद्विहित स परस्मादपि, य परस्मात्स पूर्वस्मादपि । तदादिग्रहणं चानुवर्तते । तेन 'पचसि-पचसी'ति समुदाय पत्यसवादि पदसंज्ञ इति सिद्धमेकान्तरत्वम्। ननु चेति। ततो नैक पदम्।

उ ] अथवेति। पूर्वं प्रयोगान्तराश्रयेण समानपदस्थत्व नेत्युक्तम्। इदानीमस्मिन्नेव प्रयोगे इति विशेष । गुणे सङ्ख्याया इति । उद्देश्यगतसङ्ख्याया सर्वथाऽविवक्षितत्वात्प्रयोगान्तरेऽप्यादेशे चित्तयमिद । तस्मात्पदत्वप्रयोज्यविकरणे इत्यर्थः । न च पदसमुदायस्तदेनि वोऽन्यम् । नियमार्थमिति। नियमश्चाऽखण्डपदत्वाश्रयणात्स । अखण्डत्वं—निमित्तानधिकरणनिमित्तिमत्त्वाऽघटितत्वम् । तेन 'मातृभोगीण' इत्यादी णत्व । पद चाऽत्रार्थबोधक, तेन रामनाम' 'गन्धवगान मित्यादी न णत्वम् । ननेवमप्यप्रचनार च'निति क्षुभ्न, 'अग्रेऽग्रे' इति पूर्वरूप 'रामान् रामा'निति णत्वनिषेधादिकं च न स्यादिति चेन्न,'द्वे' इति द्विर्वचनवले-नानन्तमिता स्वयमेदसमुदायस्यैवादेशस्य विधानेन प्रत्येकमपि पदत्वसिद्धे । तदुक्त कैयटेन—'पदद्वयाऽऽत्मक आदेश' इतीत्याहु । भाष्ये—सुप्तिङ्भ्यामिति । 'यस्मा'दिति परिभाषासूत्राभ्यामाभ्यां पद पदसंज्ञा विशेषविषयां करिष्याम इत्यर्थः । ननु यस्मात्सुप्तिङ्विहितस्तदादि तदन्तस्यैव पदत्व युक्तम् । 'पचसि पचसी'त्यत्र य आदि 'पच्' शब्दो न तस्मादत्यसिन्निति कथ समुदायस्य पदत्वमत आह—अर्थरूपेति । य पूर्वस्मात्तिङ् विहित स परस्मादप्यत्यस्य प्रकृते उपयोगश्चिन्त्य । न च द्वित्वात्पूर्वं प्रवृत्ततया 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्ति लक्ष्यभेदात् । तदादिग्रहणञ्चेति । 'प्रत्ययग्रहण'इति

१ अय पाठ क्वचित् ।

ज्ञापयति—'भवत्येव चार्तीयकेभ्यस्तद्धितोत्पत्ति'रिति, यदयं कस्कादिषु कौतस्कुतशब्दं पठति ॥ [ सर्वस्य द्वे ] ॥

नित्यवीप्सयोः ।८।१।४।

इह कस्मान्न भवति—हिमवान्, वाटव, पारियात्र, समुद्र इति। 'नित्ये द्वे भवत' इति प्राप्नोति ॥ नैष दोषः—अयं नित्यशब्दोऽस्त्येव कूटस्थेष्व

---

प्र] स्यथाप्यप्रातिपदिकादपि द्विरुक्ताज्ज्ञापकात्तद्धितोत्पत्तिः। कुत कुत आगत इति कस्कादिषु पाठान्निपातनादव्ययत्वभूणत्वमभावं अण्प्रत्ययः। [ सर्वस्य। ]

नित्यवीप्स। इहेति। यदा नाश्रितप्रवृत्तिनिमित्तविशेषो नित्यशब्दः परिगृह्यतेऽङ्गीकृतसामान्यप्रवृत्तिनिमित्तो वा तदाऽत्रापि प्राप्नोति। निमित्तविशेषानाकरणेऽप्याभीक्ष्ण्यमङ्गीकृत न कूटस्थत्वमिति विशेषे प्रमाणाऽभाव इति मत्वा प्रश्नः। अथ वा नित्यशब्दस्य कूटस्थत्वलक्षणो मुख्योऽर्थः, शब्दान्तरमनिष्यनपेक्षणात्, आभीक्ष्ण्यं तु क्रियापदप्रयोगमपेक्ष्य गौणोऽर्थः, अविच्छेदोपलब्धिसामान्यमाश्रित्य तत्र प्रयोगात्। ततश्च गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति कूटस्थवाचिनामेव द्विर्वचनेन भाव्यम्। येषां च प्रयोक्तृभिरुत्पादविनाशौ नोपलभ्येते ते नित्याः। तत्र नित्यशब्दस्य तत्पर्यायाणां च 'नित्य कौटिल्ये गतौ' 'ध्रुवमपाये' इत्यादिनिपातनाच्छब्दयोर्द्विर्वचनाऽभावं प्रतिपत्तुमिति विशेषानुसन्धानस्यन्ति—हिमवानिति। कूटस्थेष्वविचालिष्विति। उभयोपादानं नित्यार्थाभिव्यक्त्यर्थं। कूटस्थे

---

उ] घटेऽयं घटः अग्निदत्त इ' इत्याद्यन्तरस्य स्यात्। अत्र स्थाने द्विर्वचनत्वमेव न्याय्यमिति वाच्यम्, ईदृशप्रयोगस्यानभिधानेनाऽदोषात्॥ [ सर्वस्य द्वे ] ॥

नित्यवी। नन्वाभीक्ष्ण्यवृत्तिर्नित्यशब्दस्य ग्रहणादाभीक्ष्ण्यस्य च क्रियाविषयत्वात् कथमत्र प्रसङ्गोऽत आह—यदानाश्रितेति। अत्र पक्षे नित्यशब्दः प्रत्ययार्थे इत्यर्थः। अङ्गीकृतसामान्येति। तच्च नित्यशब्दस्य मिति भावः। विशेषे प्रमाणाभाव इति। तथा च सकलविशेषाणां ग्रहणमिति भावः। अथ वेति। योऽर्थः शब्दादुच्चरितमात्रादन्यनिरपेक्षः प्रतीयते स मुख्यः, यस्तु शब्दान्तरसन्निधानादिना प्रतीयते स गौण इति विभागः। क्रियापदेति। 'नित्यप्रहसित' इत्यादौ। मुख्यार्थमादायमन्तरेण प्रतीयमानत्वं गौणत्वात् दर्शयति—अविच्छेदोपलब्धीति। कूटस्थस्य यथाऽविच्छेदेनोपलब्धिस्तथा प्रसङ्गनादस्यापीति भावः। सामान्यम्—सादृश्यम्। कूटस्थत्वं नाम किं तदाह—येषाञ्चेति। न तु सर्वथोत्पत्तिनिरोधरहितत्वं तस्य ब्रह्मण्येव सत्त्वेन 'नित्या पृथिवी'त्यादेरनुपपत्तेः। अत्र पक्षेऽनिष्ट एव द्वित्वं प्राप्नोति न त्विष्टमिति भाष्यार्थः। तत्र नित्यशब्दतत्पर्यायाणां

---

१ 'पाण्डव' पा०। 'माल्यवान्' इति 'विन्ध्य' इति वा केचित् पठन्ति। २ 'पारियात्र' पा०।

विचालिषु भावेषु वर्तते । तद्यथा—नित्या द्यौः नित्या पृथिवी नित्यमाकाशमिति । अस्त्याभीक्ष्ण्ये वर्तते । तद्यथा—नित्यप्रहसितो नित्यप्रजल्पित इति । तद्य आभीक्ष्ण्ये वर्तते तस्येदं ग्रहणम् ॥

प्र ] ष्वित्येतावत्युच्यमाने राशेरपि नित्यत्वं प्रतीयेत, यस्मादवयवो न क्रियते। तथा चोच्यते 'तथा कूटस्थं राशिं कुरु, नाऽस्मादवयवः कर्तव्य' इति । एवमविचालिष्वित्युच्यमाने यदा क्रियारहितं द्रव्यं भवति तदा तस्य नित्यत्वप्रसङ्गः । उभयोरुपादाने तु 'येऽर्था उत्पादविनाशरहितास्ते नित्या' इत्युक्तं भवति । नित्या पृथिवीति । अवयवानां विचालेऽप्यवयविस्वभावा पृथिवी स्वरूपान्न चलतीति नित्योच्यते । तद्विति । आभीक्ष्ण्यवचन एवाऽत्र नित्यशब्दो गृह्यते न कूटस्थवचनः । कूटस्थवचने हि तद्वाचिनां सुबन्तानां स्वार्थ एव द्विर्वचनं स्यात् । न चैव लोके प्रयोगोऽस्ति, प्रयुक्तानां चेदमन्वाख्यानं । हिमवान्–हिमवा'निति ह्युक्ते वीप्सा प्रतीयते न तु स्वार्थः । सुबन्तानामेव च नित्यवीप्सालक्षणद्विर्वचनविधानेन तिङन्तानि नाऽनुगृहीतानि स्युः । आभीक्ष्ण्यलक्षणे तु नित्यत्वे गृह्यमाणे तल्लक्षणं द्विर्वचनं तिङन्तानां, वीप्सालक्षणं तु सुबन्तानामित्युभयानुग्रहः कृतो भवति । गौणोऽपि चार्थो लक्ष्यदर्शनवशादिहाश्रीयते, यथा 'शीतोष्णाभ्यां कारिणि' 'पार्श्वेनान्विच्छती'त्यादौ । यद्याभीक्ष्ण्ये द्विर्वचनं विधीयते किमर्थं वार्तिककारः–'क्रियासमभिहारे द्वे भवत इति वक्तव्यम्' 'आभीक्ष्ण्ये द्वे भवत इति वक्तव्य'मिति वक्ष्यति[१] । क्रियासमभिहारे द्विर्वचनं विधीयमानं यथा लोडन्तस्य भवति–'लुनीहि लुनीहीत्येवायं लुनाती'ति, तथा पचपचेत्यादौ यङन्तस्य कस्मान्न

उ ] त्यागे बीजमाह—नत्र नित्यशब्दस्येति । पौनरुक्त्यपरिहारायाह—उभयेति । नित्यार्थेति । नित्यशब्दप्रतिपाद्यार्थेत्यर्थः । उभयोरुपादाने तु समासमध्यादभिमतार्थलाभ इत्याह–येऽर्था उत्पादेति । प्रयोगे पल्लवमानेत्यादि । ननु पूर्वविकारागमादीनाम् नित्यत्वदर्शनात्कथं नित्यत्वमत आह–अवयवानामिति । भाष्ये–तस्येदमित्यत्र तस्ये त्यदमित्यवधारणमित्याह–आभीक्ष्ण्यवचन एवेति । अत्रोपपत्तिमाह–कूटस्थग्रहणे हीति । नित्यपदेन निर्देश । तदनुग्रहाय च आभीक्ष्ण्यवाचिग्रहणमेव न्याय्यमित्याह सुबन्तानामेवेति । आभीक्ष्ण्य–मौन पुनरुक्त । गौणोऽपिचेति । पदान्तरसमभिव्याहारगम्यत्वादस्य गौणत्वमुक्तम् । शीतोष्णशब्दाभ्यां मन्दकारित्वेन्यार्थतृतीयकारि इति बोध्यम् । यद्याभीक्ष्ण्ये इति । आभीक्ष्ण्यस्यैव च क्रियासमभिहार इत्यभिमान । एवमाभीक्ष्ण्ये द्वैवाच्य इत्यस्यापि वैयर्थ्यं । शङ्कान्तरं करोति–क्रियासमभिहारे इति ।

१ इद क्वचित्र । २ 'भवत' इत्येन पर्यन्तमेव वार्तिकमित्यन्ये ।

प्र ] भवति¹। उच्यते—लोण्मुल्तावाभ्यामेव विषये विहितात्विति ताभ्यामेव तस्य द्योतितत्वादप्राप्तं द्विर्वचनं मत्वा तद्विधानम्। अथ यङ्द्विर्वचनाभ्यां सहिताभ्यां सामीप्यं द्योत्यत इति वा वार्तिककारः प्रदर्शयति। क्रियासमभिहारश्च द्विविधो भृशार्थः पौनःपुन्यं च। तत्र भृशार्थे द्विर्वचनस्याऽप्रसङ्ग एव। आभीक्ष्ण्यमपि लोटाऽभिव्यक्तमिति तत्रापि तन्न प्राप्नोतीति विधीयते। तत्र यङ् क्रियासमभिहारव्यभिचाराऽभावादर्थैव स्वार्थिकेन क्रियासमभिहारद्योतनाद्यङन्तस्य न भवति। यदा तु भृशार्थे यङ् तदा पौनःपुन्यप्रतिपिपादयिषया द्विर्वचनं भवत्येव—पापच्यते—पापच्यते इति। लोटोऽपि भवति,—पापच्यस्व—पापच्यस्वेति। लोट् तु विषयान्तरेऽपि विधानाद्व्यभिचरति क्रियासमभिहारमिति द्विर्वचनसहित एव तं द्योतयतीति तदन्तस्यैव क्रियासमभिहारलक्षणद्विर्वचनप्रवृत्तिः। अथ नित्यतायां द्विर्वचनं विधीयमानं धातुमात्रस्य कस्मान्न भवति? धातुर्हि क्रियावाची क्रिया धर्मश्चाभीक्ष्ण्यम्। नैतदस्ति। परिगृहीतसाधना क्रिया व्यवहारोपयोगिनीति तिङन्तस्यैव भवति। न च धातुमात्राद्द्विर्वचनेन नित्यत्वं द्योत्यते इति धातु

उ ] भृशार्थः—पौनःपुन्यं च क्रियासमभिहारः। अप्राप्तं द्विर्वचनं मत्वेति। समानकर्तृकयोरित्यादिना विषयान्तरेऽपि तद्विधानात्तयोस्तद्द्योतने सामर्थ्याऽभावमभिप्रेत्योक्तं तदाह—अथ यङित्यादि। एवञ्च न्यायसिद्धानुवादकमेव तदिति भावः। एवमामीक्ष्ण्ये अस्य सार्थक्यमुक्त्वा क्रियासमभिहारे इत्यस्य तदाह—क्रियासमभिहारश्चेति। एवञ्च भृशार्थेऽप्राप्तविध्यर्थमेतदिति भावः। नन्वेवं भृशार्थे इत्येव वक्तव्यं क्रियासमभिहारग्रहणं व्यर्थमत आह—आभीक्ष्ण्यमपीति। विधीयत इति। क्त्वो विध्यानो समुच्चये च विधानादाभीक्ष्ण्याभिव्यक्तौ केवलस्य सामर्थ्याऽभावाद्द्विर्वचनमावश्यकमिति प्रतिपादयितुं विधीयत इति ज्ञापयत्। यङन्ते द्वित्वं निवारयति—तत्रेति। द्विर्वचनं भवत्येवेति। नित्यवीप्सयोरित्य नेनेत्यर्थः। सकलाऽवयवविशिष्टक्रियां सम्पादयन् पुनः पुनः पचतीत्यर्थः। न च पौनःपुन्ये यङि तस्मिन् भृशार्थविवक्षायामपि द्वित्वापत्तिः सूत्राऽप्राप्तेः। वार्तिके ■ लोडन्तमात्रविषयमित्यग्रे निरूपयिष्यामः। लोटोऽपीति। भृशार्थविशिष्टे पौनःपुन्यप्रतिपादनाय धातुसम्बन्धे विवक्षिते लोन्द्विर्वचने अपि भवत इत्यर्थः। तदन्तस्यैवेति। लोडन्तस्यैव न तु यङन्तस्येत्यर्थः। अत एव क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे भवत इति वचनं क्रियासमभिहारे लोडिति सूत्रे भाष्ये पठितमिति भावः। न च पौनःपुन्ये यङि नित्यवीप्सयोरिति यङन्ते दुर्वारम्। न च यङोक्तत्वान्नतत्। भृशार्थेऽपि यङो विधानेन केवलस्य द्योतने सामर्थ्याभावादिति वाच्यम्। भृशार्थे इत्येव सिद्धे क्रियासमभिहारग्रहणादामीक्ष्ण्ये ■ इत्यस्मात् ज्ञापकात्पौनःपुन्यस्य कथञ्चिद्द्योतने सौत्रद्वित्वाऽप्रवृत्तिज्ञापनेन यङन्ते द्वित्वा

1 वीप्सु पा०। २ दुर्वारं यङोक्तत्वात्। न च भृशार्थेऽपि इति पाठान्तरम्।

क्व पुनर्वीप्सार्थं ? । ॥*॥ अनवयवाभिधानं वीप्सार्थं ॥*॥ अनवयवेन द्रव्याणामभिधानमेवं वीप्सार्थं । ॥*॥ अनवयवाभिधानं वीप्सार्थं इति चेज्जात्याख्यायां द्विवचनप्रसङ्गः ॥*॥ अनवयवाभिधानं वीप्सार्थं इति चेज्जात्याख्यायां द्विवचनं प्राप्नोति । व्रीहिर्यवं इति ॥*॥ न वैकार्थत्वाज्जातेः ॥३॥ न वैष दोषः ॥ किं कारणम् ? ॥ 'एकार्थत्वाज्जातेः' । एकार्थौ हि जाति ।

प्र] द्योत्यते । क्व पुनर्वीप्सार्थं इति । अर्थं प्रयोजनम् । एवं भूताया वीप्साया उपादाने किं प्रयोजनमिति प्रश्नः । अनवयवाभिधानमिति । साकल्येन द्रव्याणां क्रियागुणसंबन्धप्रतिपादनं वीप्साफलमित्यर्थः । जात्याख्यायामिति । जातौ पदार्थे साकल्येन द्रव्याणां प्रतिपत्तिर्भवति । यथा 'ब्राह्मणो न हन्तव्य' इति सर्वब्राह्मणहननप्रतिषेधः प्रतीयते । न वैकार्थत्वादिति । यदि व्यक्तिव्यतिरिक्ता जातिरथ व्यक्तिभेदहेतवो व्यक्तय एव जातिः, उभयथा भेदाभावाज्जातिलक्षण एकोऽर्थः तत्र यथाग्न्यानयने चोदितेऽचोदितमपि पात्रं नान्तरीयकत्वादग्न्यानयनस्योपादीयते तथा जातौ चोदितायां द्रव्यं क्रियाङ्गभावेन प्रतीयते, ततोऽनवयवाभिधानस्य भेदविषयत्वाज्जात्यभिधाने तदभावाद्द्विर्वचनाऽभावः । एकशेषेऽप्यस्मिन्वने शोभना वृक्षा इति कतिपयानामपि वृक्षाणां शोभनत्वेन प्रयोगदर्शनादनवयवाभिधानाऽभावाद्द्विर्वचनाऽभावः । 'ग्रामो ग्रामो रमणीय'

उ]मिष्य इत्यर्थः । अत्र किमिदं वाप्त्यस्यनन न पौनरुक्त्यम् । अनवयवाभिधान-साकल्याभिधानं, व्याप्तत्वमिति फलितं । साकल्येन द्रव्याणां क्रियागुणेति । ग्रामे ग्रामे पानीयमित्यादावपि अस्तिक्रियाया सत्वेन तया सम्बन्धस्य प्रतिपादनाद्दोषः परन्तु इदमुपलक्षणं द्रव्याऽभावयोरपि ग्रामे ग्रामे स्वामी ग्रामग्रामे न दृष्ट मित्युदाहरणे । आद्ये स्वामीश्वरेति सप्तमी । भेदाभावादिति । जायते स्वरूपम् एव तस्याऽभावः । अन्ये तद्गतोत्पाद-पद्धतानाऽभावः । ननु जाते क्रियाङ्गत्वाऽयोगाद्द्रव्यस्यापि शब्दवाच्यताया आवश्यकत्वे यत आह-तत्र यथेति । आक्षेपाद्द्रव्यप्रतीतिर्न तु शब्दवाच्य इति भावः । भेदविषयत्वादिति । शब्दवाच्यार्थगतपरस्परनिरूपितभेदविषयत्वादित्यर्थः । शब्दवाच्याभिन्नार्थविषयत्वादिति यावत् । द्विर्वचनविषयानवयवाभिधानस्य स्वरूपकथनमिदं । जातिव्यावृत्तये एव 'पृथक्सङ्ख्यायुक्तानि' ति पूर्वलक्षणे दत्तम् । अनेनाऽप्यस्य व्यावृत्तिरित्याह–एकशेषेऽपीति । कतिपयानामपीति । परिगृहीतैकत्वानामप्यानां च पृथक्सङ्ख्यायुक्तत्वाऽभावः । अत एवैकरूपे प्रत्येक विधेयसम्बन्धो नियमेन न प्रतीयते । नहि ब्राह्मणेभ्य धनं दद्य मित्युक्ते नियमेन प्रत्येकं धनं दद्य (भवति) । 'वृक्षं वृक्षं प्रति सिञ्चती'त्यत्र च तथा प्रतीतिः ।

१भाष्यमिदं न वार्तिकमित्यये । २'मेव'पा० ३ व्रीहिर्यवं पा० । ४'एकार्थ' ५ द्विर्वाभाव 'पा०।

'एकमर्थं प्रत्याययिष्यामी'ति जातिशब्दः प्रयुज्यते ॥*॥ अनेकार्थाश्रयत्वाच्च वीप्सायाः ॥*॥ अनेकार्थाश्रया च पुनर्वीप्सा । 'अनेकमर्थं सम्प्रत्याययिष्यामी'ति वीप्सा प्रयुज्यते । एकार्थत्वाज्जातेरनेकार्थाश्रयत्वाच्च वीप्साया जात्याश्रयाया द्विर्वचनं न भविष्यति ॥*॥ निवर्तकत्वाद्वा ॥*॥ अथ वा नाऽनेन

प्र ] इति सूक्ते निःशेषग्रामगतरमणीयत्वप्रतीतिः, तथाऽस्मिन्वने वृक्षो वृक्षः शोभन इत्युक्ते सर्वेषामेव वृक्षाणां प्रत्येकं सन्निवेशनिरपेक्षदर्शनीयत्वयोगप्रतीतिः, 'सर्वे वृक्षाः शोभनाः' इत्यत्र तु सर्वनाम्ना वीप्साया द्योतनाद्द्विर्वचनाऽभावः । इह तु 'सर्वे माषा ब्राह्मणेभ्यो दत्ताः' इति यद्यपि कस्मै चित्रयो दत्ताः कस्मैचित् पञ्च, तथापि प्रयोगाद्वीप्साऽभावः । यदा त्वेकैको दत्तस्तदा वीप्सासम्भवान्माषो माषो दत्त इति द्विर्वचनं भवति । वृत्तिकारैरप्युक्तम्—'नानावाचिनामधिकरणानां क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्से'ति । नानाभूतमर्थं द्रव्यलक्षणं ये शब्दा ब्रुवन्ति तेषां यान्यधिकरणान्यभिधेयानि तेषां सहाऽविवक्षितानां पृथक् सङ्ख्यायुक्तानां प्रत्येकं क्रियागुणयुक्तानां प्रयोक्तुः क्रियया गुणेन वा युगपदेककाला व्याप्तुमिच्छा सा वीप्सा । तत्र नानावाचिशब्देन जातिशब्दनिरासः । युगपद्ग्रहणेन क्रमविवक्षायां द्विर्वचननिरासः । यथाऽस्मिन्वनेऽयं वृक्षः शोभनोऽयं वृक्षः शोभन इति क्रमेण शोभनत्वप्रतिपादने यद्बहूनपि शब्दान् प्रयुङ्क्ते । वीप्सा प्रयुज्यत इति । वाक्यार्थविषयत्वाद्द्विर्वचनं वीप्साशब्देनोच्यते । निवर्तकत्वाद्वेति । नेदं द्विर्वचनस्य विधायकमिति जातेः

उ ] द्विर्वचनविषयेऽनवयवाभिधानस्येत्यपि ग्रामो ग्राम इति । सन्निवेशानिरपेक्षेति । साहित्यनिरपेक्षत्वार्थं । तेनैकशेषाद्वैधर्म्यं दर्शितम् । वैधर्म्यान्तरमाह—इह [illegible] सर्वे माषा इति । युगपदिति । क्रियागुणाभ्यां युगपद्व्यापकत्वेनान्वयं बोधयितुमिच्छेत्यर्थः । सहाविवक्षितानामिति । साहित्यभानाऽभावात्तच्च बोध्यं, तदेवाऽऽह—'पृथक्सङ्ख्यायुक्तानामिति । तदुपपादकमेव 'प्रत्येकं क्रियागुणयुक्तानामि'ति । 'युगप'दित्यस्य व्याख्या—एककालेति । [illegible]र्थरूपायां वीप्सायां प्रयोगकर्तृत्वमयुक्तमत आह—वीप्साविषयत्वादिति । अनेन च जातिशब्देषु प्रयोक्तुर्व्याप्त्यसम्भवान्न द्विर्वचनप्रसक्तिरित्युक्तम् । नेदमिति । ननु द्विःप्रयोगो द्विर्वचनपक्षे समुदायस्यादेशत्वमावश्यकमिति कथं नियमार्थं स्यात्, व्यक्तपदाभिधायकनानाप्रयोगेषु सैव प्रकृतिः स एव प्रत्यय इति कल्पना कर्तुमशक्यार्थभेदादिति समुदायादेशत्वं दुर्लभमिति चेन्न, वीप्साविषये पदान्तरेणाप्रयुक्तनिषेधो

१ अनेकार्थं पा० । २ नेकार्थत्वाच्च पा० । ३ इदं क्वचिन्न ।

पद । तत्राऽन्तरेण सर्वग्रहण सविभक्तिकस्य भविष्यति ॥ भवेत्सिद्ध यत्र विभक्त्यन्त पद, यत्र तु खलु विभक्तौ पद तत्र न सिध्यति–ग्रामो वा दीयते, ग्रामो नौ दीयते । जनपदो वा दीयते, जनपदो नौ दीयते ॥

ननु च स्थग्रहण क्रियते तेन सविभक्तिकस्यैव भवति ॥ अस्त्यन्यत्तस्य ग्रहणस्य प्रयोजनम् ॥ किम् ? ॥ श्रूयमाणविभक्ति[2]विशेषण यथा विज्ञायेत– 'यत्र विभक्तिः श्रूयते तत्र यथा स्यु'। इह मा भूवन्[3] 'इति युष्मत्पुत्रो ददाति'

प्र ] *विशेषणपक्षमाश्रयिष्यते न तु स्थानषष्ठीत्यर्थ । सविभक्तिकस्येति । अन्यथा* पदयोर्युष्मदस्मदोरादेशा स्यु । तत्र षष्ठ्येकवचने ङसिङसोश्चेत्यसि पूर्वे कादेशे दोषाऽभावेऽपि वचनाऽन्तरेषु दोषप्रसङ्ग । सर्वग्रहणे तु सति *युष्मदस्मद्भ्या तदवयव समुदायो ऽभ्यन्त इति युष्मदस्मदवयवस्य सर्वस्य* पदस्य वाम्नावादय आदेशा भवन्ति । पदस्येति हि वर्तत इति । तेन युष्मदस्मद्घटित पदस्यादेशा भवन्तीत्यर्थ । भवेत्सिद्धमिति । यत्र केवले युष्मदस्मदी पदे तत्र तद्घटित प्रतिपत्तेरयोगादिति भाव ।

स्थग्रहणमिति । षष्ठ्यादिष्वादेशविधानाद्युष्मदस्मदोस्तत्स्थत्वे लब्धे स्थग्रहण निमित्तसहितयुष्मदस्मत्प्रतिपत्त्यर्थं विज्ञायत इति सविभक्तिकयोरादेशसिद्धि । यथाऽश्वस्थ आनीयतामित्युक्ते सहैवाऽश्वेनाऽऽनीयते । श्रूयमाणविभक्तिविशेषणमिति । यत्र श्रूयते विभक्तिस्तत्र तत्स्थत्व युष्मदस्मदोर्न तु तस्या लुप्तायाम् । प्रत्ययलक्षणेन च कार्यं शास्त्र वाऽनिदिश्यते न तु तात्स्थ्य, तस्याऽपौरुषेयत्वात् । तदेवमन्यार्थत्वात्स्थग्रहणस्य सर्वग्रहण सविभक्तिकादेशार्थं कर्तव्यम् । इति

उ ] कार्याणि षष्ठ्याश्रयनार्थान्यपि बोध्यन्। ङसिङसोश्चेत्यसि पूर्वैकादेश इति । 'ते–म इत्यादिविधनौ ङसिङसोश्चेति पूर्वैकादेश इत्यर्थ । वचनान्तरेषु– ग्रामो वां, जनपदो नौ इत्यादिषु । तदवयव इति बहुव्रीहि । ननु युष्मदस्मदोः प्रातिपदिकयो पदत्वाऽभावात्सामानाधिकरण्येनाऽन्वय कथमुपपद्यतेऽत आह–तद्घटित प्रतिपत्तेरिति । किन्तु पदयोर्युष्मदस्मदोरित्येव प्रतीति स्यादिति भाव । ननु यत्र षष्ठ्यादिसत्त्वस्तत्र युष्मदस्मदोरादेशार्थं स्थग्रहण स्यादिति कथ सविभक्तिकयोरादेशसिद्धिरत आह–षष्ठ्यादिष्विति । तत्स्थत्वे लब्धे इति । तद्ग्रहणनिमित्तमेव तत्स्थत्वमित्यभिमान । तत्र तत्स्थत्वमिति । असत आधारत्वाऽयोगात् । भाष्ये 'श्रूयमाणविभक्तिविशेषण'मिति कर्मधारयगर्भ कर्मधारय । अपौरुषेयत्वादिति । पाणिनीयस्पृष्टस्यान्याऽभावादित्यर्थ । अशास्त्रीयत्वादिति यावत् ।

1 'स्यैव' पा० । 2 'श्रूयमाणविशेषण' पा० । 3 स्यादिह मा भूदिति' पा० ।

मा सम्प्रेक्ष्य सद्दश्य[1] समीक्ष्य गत । इह न स्यात्—ग्रामस्तव स्व सम्प्रेक्ष्य सद्दश्य[1] समीक्ष्य गत ॥ ग्रामो[1] मम स्व सम्प्रेक्ष्य सद्दश्य समीक्ष्य गते[1] ॥

## सपूर्वाया प्रथमाया विभाषा ।८।१।२६ ।

॥*॥ युष्मदस्मदोरन्यतरस्यामनन्वादेशे ॥*॥ युष्मदस्मदोरन्यतरस्या-मनन्वादेश इति वक्तव्यम् । ग्रामे कम्बलस्ते स्वम्[2] , ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम् ॥ अनन्वादेशइति किमर्थम् ? ॥ अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलो मे स्वम् ॥

अपर आह ॥ ॥ सर्व एव वाक्यावादयोऽनन्वादेशे विभाषा वक्तव्या ॥ ॥ कम्बलस्ते स्वम् कम्बलस्तव स्वम् । कम्बलो मे स्वम् कम्बलो मम स्वम् ॥ अनन्वादेशइति किमर्थम् ? ॥ अथो कम्बलस्ते स्वम् अथो कम्बलो मे स्वम् ॥ न तर्हीदानीमिद वक्तव्य,—सपूर्वाया प्रथमाया[3] विभाषेति ? ॥ वक्तव्यञ्च ॥ किं प्रयोजनम् ?॥ 'अन्वादेशार्थम्' । अन्वादेशे विभाषा यथा स्यात् । अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलस्तव स्वम् । अथो ग्रामे कम्बलो मे स्वम् । अथो ग्रामे कम्बलो मम स्वम् ॥ [ सपूर्वाया प्रथमाया ]

प्र ] सद्दश्य समीक्ष्येति पर्यायत्वाद्विकल्पेनैषा प्रयोग । भाष्ये तु पदार्थैरित्यर्थ-ग्रहणप्रयोजनकथनार्थमासुपादानम् । [ अनुपादत्त सर्वमपाद्यानार्थम् ] ॥

सपूर्वाया । युष्मदस्मदोरिति । 'सपूर्वाया प्रथमाया विभाषे'ति यो विकल्प सोऽनन्वादेशे भवति, अन्वादेशे तु नित्य आदेशविधिरित्यर्थ । व्यवस्थितविभाषेयमित्युक्त भवति । अन्वादेशार्थमिति । विरोधात्पूर्ववाक्य 'युष्मदस्मदोरन्यतरस्यामनन्वादेश' इति बाध्यते, तेनाऽन्वादेशानन्वादेशयो सपूर्वाया प्रथमाया विभाषा भवति । [ सपूर्वाया प्रथमाया विभाषा ] ॥

उ ] तेनेति भाव । समानवाक्याधिकारात्तु युक्तयुक्तेऽपि भवतीति बोध्यम् । 'नचवे'ति सूत्र तु तत्र समानवाक्ये ह्यस्याऽभावायुक्तयुक्ते न प्रवर्तते इति बोध्यम् । अतएव भाष्ये 'पदार्थैश्च प्रतिषेध' इत्येवोक्तम् । विकल्पेनेति । पर्यायाणा सह प्रयोगाऽभावादिति भाव । भाष्य पर्यायोपादान किमर्थमत आह—भाष्येत्विति । [ ॥ अनुगत्त भव ॥ ]

सपूर्वाया । व्यवस्थितेति । नैव स्मिन्दृष्टवचनान्तर व्यर्थमिति भाव वार्तिकस्य व्याख्यानान्तर भाष्ये—अपर आहेति । ननु पूर्वव्याख्याने 'सपूर्वाया इति विकल्पोऽन्वादेशे न भवती'त्युक्तम्, इदानीं ▪ तत्र विकल्प इति पक्षभेदात् कथ सापुन व्यवस्थेयत आह—विरोधादिति । परया व्याख्यया पूर्वव्याख्या बाध्यत इत्यर्थ । 'पूर्ववाक्य'मित्यस्य पूर्वमेतद्व्याख्यानवाक्यमित्यर्थो बोध्य ।

१ अयपाठ क्वाचि न । २ अनोदाहरणद्वयमेव क्वचित् दृश्यते । ३ 'प्रथमाया'इति क्वचिन्न ।

## तुपश्यपश्यताऽहैः पूजायाम् ।८।१।३९।

'पूजाया'मिति वर्त्तमाने पुनः पूजाग्रहणं किमर्थम् ? ॥ अनिघातप्रतिषेधाऽभिसम्बद्धं तेन[1]। यदि तदनुवर्त्तेत[2] इहाऽप्यनिघातप्रतिषेधः प्रसज्येत । इष्यते चाऽत्र निघातप्रतिषेधः ॥ यथा पुनस्तत्र यावद्यथेत्येताभ्यामनिघाते प्राप्तेऽनिघातप्रतिषेध उच्यते इहेदानीं केनाऽनिघाते प्राप्तेऽनिघातप्रतिषेध उच्येत[3] ? ॥ इहापि 'यद्वृत्तान्नित्य'मित्येवमादिभिः ॥ [ तुपश्यपश्य ]

## एहि मन्ये प्रहासे लृट् ।८।१।४६ ।

किमर्थमिदमुच्यते, न 'गत्यर्थलोटा लृ'डित्येव सिद्धम्?॥[॥ ॥ नियमाऽर्थोऽयमारम्भः ॥ ॥]॥ नियमार्थोऽयमारम्भः – 'एहि मन्ये प्रहास एव यथा स्यात्'॥ इह मा भूत् ?॥ एहि मन्ये रथेन यास्यसीति ॥ [ एहि मन्ये प्रहासे लृट् ]॥

## जात्वपूर्वम् ।८।१।४७।

---

प्र ] एकमजयदिति पदमटस्वरेणाद्युदात्तमपरमनुदात्तं, तत्र पूर्वणानेकस्य निघातनिषेधे प्राप्ते क्वचिदेकस्य यथा स्यादिति वचनम् । तत्र छन्दसि दृष्टाऽनुविधानाद् यथाप्रयोगं व्यवस्था । [ छन्दस्यनेकमपि साकाङ्क्षम् ]॥

तुपश्य । अनिघातेति । 'यावद्यथाभ्या'मित्यनेनाऽनिघाते प्राप्ते 'पूजायामनन्तर'मिति प्रतिषिद्धः । इह त्वनिघात इष्यत इति पुनः पूजाग्रहणम् ॥

एहि । आङ्पूर्वादिणो लोट् सिपः हिरादेशः । एहि मन्य इति । अत्र हासेऽपि वैयधिकरण्यादुत्तमप्रयोगः । एहि त्वं रथेन यास्यसीत्येवमहं मन्य इत्यर्थः । 'यास्यसी'त्यस्य निघातो भवत्येव । उत्तमस्याऽतन्त्रत्वादेहि मन्यसे रथेन यास्यामीत्यत्रापि नियमादनिघाताऽभाव इति केचिदाहुः । [एहिमन्ये]॥

---

उ ]कथानि मस्तत्वादेवेत्यर्थः । पापाऽमवश्च एवाऽत्र पवनमिति भावः । एकमजयदिति । आद्यमित्यर्थः । तत्रपूर्वेणेति । अविरहितेनाऽनेनेत्यर्थः । वचनमिति । अपिरूपमित्यर्थः ।

तुपश्यपश्यता । एतद्विषये निघाताऽप्राप्त्या न तत्प्रतिषेधसम्भव इति शङ्कते भाष्ये– यथापुनरित्यादि प्रतिषेध उच्यते इत्यन्तेन । उत्तरयति–इहापीति । [ तुपश्य ]॥

एहि मन्ये । वैयधिकरण्यादिति । आगमनमननयोः कर्तृभेदादित्यर्थः । प्रहासे तु एहि मन्ये रथेन यास्यसी'त्यादावेककर्तृकत्वं, रथेन यास्यामीति यदि त्वं मन्यसे' इत्यर्थः । अतन्त्रत्वादिति । 'मन्ये'इति शेषः । केचिदाहुरिति । वृत्त्यनुसारिण । भाष्यानुक्तत्वमस्वारस्यबीजम् । [ एहि मन्ये प्रहासे लृट् ]॥

---

1 'तदभूत्' पा० । 2 'वर्त्तेत' पा० । 3 उच्यते' पा० । 4 दर्शनमन्' पा० ।

किमिदमपूर्वग्रहणं जातुविशेषणम्—'जातुशब्दादपूर्वात्तिङन्त'मिति, आहो स्वित्तिङन्तविशेषणं 'जातुशब्दात्तिङन्तमपूर्व'मिति ? ॥ जातुविशेषणमित्याह ॥ कथं ज्ञायते ? ॥ यदयं 'किंवृत्तं च चिदुत्तर'मित्याह ॥ कथं कृत्वा ज्ञापकम् ? ॥ अत्राऽप्यपूर्वमित्येतदनुवर्तते न चाऽस्ति सम्भवो यत्किंवृत्तं च चिदुत्तरं स्यात्तिङन्तं चाऽपूर्वम् । अत्रापि तिङन्तविशेषणमेव स्यात् ॥ कथम् ?॥ किंवृत्ताच्चिदुत्तरात्तिङन्तमपूर्वमिति ॥ यत्तर्हि 'आहो उताहो चानन्तर'मित्यनन्तरग्रहणं करोति॥ एतस्याप्यस्ति वचने प्रयोजनम्॥ किम् ?॥ शेषप्रक्लृप्त्यर्थमेतत्स्यात्—'शेषे विभाषा' ॥ कश्च शेषः ?॥ सान्तरः शेष इति ॥ अन्तरेणाऽप्यनन्तरग्रहणं प्रक्लृप्तः शेषः ॥ कथम् ? ॥ 'अपूर्व' इति वर्तते ॥

शेषे विभाषा । ८।१।५० ।

कश्च शेषः ?॥ ॥*॥ 'सपूर्वः शेषः' ॥*॥ इति ॥ [ शेषे विभाषा ] ॥

❀ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ❀ । ८।१।१ ।

---

प्र ] जात्व । किमिदमिति । निमित्तनिमित्तिसन्निधौ सति संशयात्प्रश्नः । कथं ज्ञायत इति । निमित्तस्याऽप्राधान्यात्सति प्रधाने विशेषणसम्बन्धयोग्यत्वे युक्तो विशेषणसम्बन्ध इति प्रश्नः । तिङन्तं चाऽपूर्वमिति । चिदुत्तरात्किंवृत्तात्परस्य तिङन्तस्य विद्यमानपूर्वत्वात् । अत्रापीति । 'कश्चिद्भुङ्क्ते' इत्यादावेवाऽनिघातो यथा स्यात्, 'कश्चित्पुरुषो भुङ्क्ते' इत्यादौ व्यवधाने मा भूदित्येवमर्थं तिङन्तविशेषणमपूर्वग्रहणं स्यात् । यत्तर्हीति । तिङन्तविशेषणे ह्यपूर्वग्रहणेऽन्तरेणाऽपूर्वं भवतीत्याहो देवदत्त पचतीति सपूर्वत्वादेवाऽनिघातो न भविष्यतीति किमनन्तरग्रहणेन, तस्मान्निमित्तविशेषणमपूर्वग्रहणमित्यनुमीयते । तथाऽऽहो देवदत्त पचतीति निमित्तस्याऽपूर्वत्वादनिघातः स्यादिति कर्तव्यमनन्तरग्रहणम् । इति महाभाष्यप्रदीपे अष्टमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

---

उ ] जात्वपूर्वं । निमित्तेति । जातु इत्येतन्निमित्तं, तिङन्तं निमित्ति । जातुयुक्तं तिङन्तं नानुदात्तमिति सूत्रार्थः । कश्चित्पुरुषो भुङ्क्ते इति । अत्र किंशब्दोऽपि किंवृत्तेन चिदुत्तरेण युक्तो भवत्येवेति भावः । इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते अष्टमस्य प्रथमे पादे प्रथममाह्निकम् ।८।१।१।

---

१ 'अपूर्वग्रहणं जातुविशेषणम्' इति क्वचित्पठ्यते । २ इदं क्वचित् । ३ इदं क्वचित् । ४ 'नन्तरं करो' पा० । ५ 'त्यर्थं' पा० ।

कस्याय प्रतिषेध ? ॥ * ॥ आम एकान्तर एकश्रुत्यप्रतिषेध ॥ ~ ॥ आम एकान्तर ऐकश्रुत्यस्याऽय प्रतिषेध ॥ कथ पुनरप्रकृतस्याऽसशब्दितस्यैकश्रुत्यस्य प्रतिषेध शक्यो विज्ञातुम् ? ॥ अनन्तिक इत्युच्यते । अनन्तिक

प्र ] आम ए । कस्यायमिति । 'आम्भो देवदत्ते'त्युदाहरणम् । आमिति निपातत्वादाद्युदात्त । भो इति भवच्छब्दस्य 'विभाषा भवद्भगवदघवतामोच्चावस्य ति रुत्वे ओत्वे च रूप, तस्य पदात्परस्यामन्त्रितस्य चति निघात । देवदत्तन्यस्य निघात प्राप्तोऽनेन प्रतिषिध्यते । भो शब्दस्य नामन्त्रिते इत्यनेनाऽविद्यमानवत्त्वनिषेधादेकान्तरत्वे निघाते च निषिद्धे एकश्रुतिदूरात्सम्बुद्धा वित्येकश्रुति प्राप्नोति, 'दूराद्धूते च' ति प्लुतोदात्तत्व च । तत्र स्वरितस्यार्द्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात्कार्यं स्वरितादिति सिद्ध्यर्थ'मिति वचनात्प्लुतोदात्ते कर्त्तव्ये पूर्वत्राऽसिद्धमित्येकश्रुतेरसिद्धत्वात्प्लुतोदात्तत्वमेव भवति नैकश्रुति । तत्राऽनेक प्रतिषेधसम्भवात्प्रश्न । यदि प्रकरणमपेक्ष्यते तदा निघातस्यैव निषेधेन भाव्य, नैकश्रुते । अथ सामर्थ्यात्प्राप्तस्य निषेध, तदैकश्रुतेरेव निषेधो न निघातस्य । ऐकश्रुत्यस्येति । एका श्रुतिर्यस्य तदेकश्रुति, तस्य भाव ऐकश्रुत्यम् । कथ पुनरिति । प्रकृतस्य वा प्रतिषेधो भवति, यथा नाज्झलाविति सवर्णसज्ञाया । सशब्दितस्य वा,—यथा 'न सप्रसारणे सप्रसारण'मिति ।

इतर सामर्थ्यमाश्रित्याह—अनन्तिक इत्युच्यत इति । ततश्चार्थादेकश्रुति सन्निहिता । कथ पुनरनान्तिक दूरम् [1] । उच्यते । कश्चिन्नञ्समासोऽर्थान्तरस्य वाचक । यथा अनादर इति,—परिभव अवज्ञान चोच्यते, न त्वादराऽभाव ।

उ ] आम एकान्तरमा । ननु भो शब्दस्यामन्त्रिते पूर्वमित्यविद्यमानवत्त्वे कथमेकान्तरत्वमत आह भो शब्दस्येति । एकान्तरत्वमिति । अन्तरयेन व्यवधायकत्वम् । एकमन्तर यस्य तद्भाव एकव्यवहितत्वमित्यर्थ । वस्तुतस्तत्र व्याकरणेन स्वाश्रयनिवृत्तेरन्तरमिति बोध्यम् । नैकश्रुतिरिति । प्लुतोदात्तत्वोत्तरमेकश्रुत्यप्रवृत्तेश्च न वार्यतामिति चिन्त्यम् । अथ सामर्थ्यादिति । अनन्तिकशब्दस्य दूरवाचित्वनैकश्रुतेरेव प्राप्तत्वादित्यर्थं । यथाचैकश्रुतेरेव प्राप्तिस्तथोपरिष्टात्स्फुटीभविष्यति । ऐकश्रुत्यशब्द भावप्रत्यया ऽसङ्गति परिहरति—एका श्रुतिरिति । इतर सामर्थ्यमिति । यथा प्रकरणाच्छब्दोपादानाद्वा सन्निधान तथा सामर्थ्यादपीत्यर्थ । स्पष्टप्रतिपदोक्तपरिभाषया दूरवाचकपरो

1 इति क्वचिन्न दृश्यते ।

च स्मिन् ? ॥ दूरम् ॥ दूरात्सम्बुद्धौ चैकश्रुतिरुच्यते ॥ अस्ति प्रयोजनमेतत् ?॥ किं तर्हीति ॥ * ॥ निघातप्रसङ्गस्तु ॥ * ॥ निघातस्तु प्राप्नोति—आगच्छ भो देवदत्त३ । आमन्त्रितस्याऽनुदात्तत्वं प्राप्नोति ॥ * ॥ सिद्धं तु प्रतिषेधाधिकारे प्रतिषेधवचनात्[1] ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ 'प्रतिषेधाधिकारे [प्रतिषेधवचनात्' । प्रतिषेधाधिकारे ] प्रतिषेधवचनसामर्थ्यान्निघातो न भविष्यति ॥ नैव वा पुनरत्रैकश्रुत्यं प्राप्नोति ॥ किं कारणम् ? ॥ अनन्तिक इत्युच्यते, अन्यच्च दूरमन्यदनन्तिकम् ॥ यद्येव प्लुतोऽपि तर्हि न प्राप्नोति, प्लुतोऽपि हि

प्र ] एवमत्रनाऽभिप्रायः ... दूरार्थाभिधाया । तत्रानुदात्तत्व 'पचामि देवदत्त'इत्यादौ मा भवत्य ... एक श्रुतिः प्राप्ताऽनेन प्रतिषिध्यते । निघातस्त्विति । अपवादे प्रतिषिद्धे उत्सर्गस्य न्यायप्राप्तत्वात् । सिद्धं त्विति । निघातप्रतिषेधाधिकार वचनान्निघातोऽपि प्रतिषिध्यते, अन्यथैकश्रुतिर्दूरात्सम्बुद्धावित्युक्ता नाम एकान्तर इत्युच्यते । एवमामन्त्रितस्यानन्तिक इति न वक्तव्यं भवति । केवलस्य च निघातस्यैकश्रुत्या बाधितत्वात् प्रतिषेधोऽनर्थक इति सामर्थ्यादुभयप्रतिषेध । ननु चैकश्रुतिर्देवदत्ता ३ आगच्छेत्यादौ मा भवतु कथमाम् भो देवदत्ता३ इत्यादौ निघातस्य बाधिका ?, प्रत्युत परत्वादेकश्रुतेर्निघात एव बाधक इति तस्यैवाऽत्र प्रसङ्ग इति प्रतिषेधोऽपि तस्यैव न्याय्य । तस्य च प्रतिषेधे एकश्रुति स्यादेव । नैष दोष । पदद्वयनिबन्धननिघातापेक्षयाऽधिकनिमित्त दूरात्सम्बोधनमपेक्षमाण एकश्रुति[2] सति शिष्टस्वरो भवतीति तथैव भाष्यम् । अन्यच्चेति । अन्तिकसदृश

उ.] कारणेन विहितस्य निषेध इति सामर्थ्यमिति भाव । तदाह—कश्चिदिति । अभ्यन्तरस्येति । उत्तरपदार्थविशेषणस्येत्यर्थ । ननु परत्वादेकश्रुत्यस्याऽसिद्धत्वाद्वा निघात एव प्राप्नोतीत्यत आह—तत्रेति । ननु प्रधानमल्लन्याय ... आह-अपवाद इति । 'तौ सत्' इति निर्देशात् न्यायो नास्त्येवेति भाव । नन्वत्रमेकश्रुतिनिषेधे मा भावोऽस्त्वत आह—केवलस्य चेति । सावकाशेति । पदात्परत्वाभावेन निघाताऽप्राप्तिरिति भाव । परत्वादिति । इद च यथान्यासे । वार्त्तिकोक्तोत्वर्थे तु असिद्धत्वान्निघातो भविष्यतीति बोध्यम् । सति शिष्टेति । अन्तरङ्गत्वात्पूर्वं निघाते पश्चात्प्रवर्तमानत्वेनेत्यर्थं । वस्तुतोऽसिद्धत्वादेकश्रुते पूर्वं निघाते तस्य प्राप्त्या सतिशिष्टत्व बोध्यम् । एतेनाऽर्थं ... तन्त्र ... न इति । एवं च तस्यैव निषेधो युक्त, प्रतिषेधाधिकारे विधानाच्च निघातस्यैवेति उभयनिषेधसिद्धिरिति भाव । अन्तिकसदृशमिति ।

1 'चैकश्रुति' पा० । 2 'अनन्तिकस्यानुदात्त'पा० । 3 अत्र पाठो त्रुट ।

'दूरा'दित्युमच्यते?॥ इष्टमेवैतत्संगृहीतम्, आम्भो देवदत्तेत्येत्र भवितव्यम् ॥

यद्धितुपरं छन्दसि ।८।१।५६ ।

किमर्थमिदमुच्यते यदाद्यैरेवं सर्वैरेतैरनिघातकारणैर्योगेऽनिघात उच्यते, यथैव पूर्वैर्योगे एवं परैरपि ?॥ अत उत्तरं पठति ॥ * ॥ यद्धितुपरस्य च्छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थः ॥ ॥ यद्धितुपरस्य च्छन्दस्यनिघात उच्यते ॥ [किं प्रयोजनम् ?॥] 'अन्यपरप्रतिषेधार्थः'। अन्यपरस्य प्रतिषेधो मा भूदिति ॥

प्र] यत्र दूरं न चान्तिकं तदनन्तिकं गृह्यते । अन्यथा दूरग्रहणमेव कुर्यात् । अथ वा दूरमध्ययो सामान्यशब्दोऽपि दूरे निघातस्याऽप्राप्त्या तत्प्रतिषेधसामर्थ्यादन्यथाभिधाय्यनन्तिकशब्दः । स्वरव्यञ्जनं च—आम् भो देवदत्तेत्यादावन्तिकाऽनन्तिकत्वम्, अन्तिके निघातस्य विधानात् । अनन्तिके निषेधात् ॥

यद्धि । यदाद्यैरिति । 'निपातैर्यद्यदी'ति 'हि चे'ति 'तुपश्ये'ति सूत्रैः । जाये स्वो रोहावेहीति । आङ्पूर्वादिणो लोट् सिपो हिः । गत्यर्थलोटा युक्तस्य 'रोहावे'त्यस्य 'लोट् चे'त्यनिघातः प्राप्तोऽनेन नियमेन निवर्त्यत इति स्वःशब्दाश्रयो निघातो भवति । ननु 'परमपि छन्दसी'ति वचनात् स्वःशब्दस्य पूर्वाङ्गवद्भावाज्जाये स्वरित्यस्यामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वान्निघातो नैव प्राप्नोति । नैष दोषः । 'अव्ययानां प्रतिषेध' इति वचनात् परस्य पूर्वाङ्गवत्त्वाऽभावादव्ययस्य । यद्वा—षष्ठ्यामन्त्रितकारकवचनं तन्निमित्तवचनं वा अङ्गवद्भावे आश्रितमिति नास्ति पूर्वाङ्गवद्भावः । नहि स्वःशब्दः षष्ठ्यन्तो, नाप्यामन्त्रित

उ.] अनाम्रेण इव दाविर माद्रदस्पृक्को नत न तु विपक्षस्पृक्क इत्यर्थः । अन्यथेति । प्रतिपत्तिलाघवान्मात्रालाघवमिति भावः । नन्वनान्तिकग्रहणसामर्थ्यं द्वयमव्ययोरुभयोरपि ग्रहणसत्त्वत आह—अथवेति । निघातस्याऽप्राप्त्येति । एकश्रुत्या बाधादिति भावः । कथं पुनरनयोर्निर्णयोऽत आह—स्वरव्यञ्जनयेति । भाष्ये इत्येव भवितव्यमिति । अत्र पक्षे पुनस्त्वाप्यनेन निषेधः । एकश्रुतेरिव तस्याऽपि प्रतिपदोक्तत्वात् । वार्तिके चैकश्रुतिग्रहणमप्राकरणिकस्याप्यस्य निषेध इत्यर्थस्योपलक्षणमित्याशयः । 'पुनोदात्तवमेव भवतीति' पूर्वैकैयस्तु प्राप्तिमात्राभिप्रायः । एवञ्च 'सर्वस्य द्वे'इति सूत्रस्थे 'आम्पत्तमि देवदत्ते'त्युदाहरणे पुनःपुनरेको लेखकप्रमादात् 'पुन उदात्त' इति न तत्कैयटोऽप्यत्रमिति दिक् ।

यद्धितु । भाष्ये—अन्यपरस्येति । परयोगे चेदनैरेव नान्यैरित्यर्थः । निघातो नैवेति । पदात्परत्वाऽभावादिति भावः । परस्याऽव्ययस्य पूर्वाङ्गवत्त्वाऽभावादित्यन्वयः । षष्ठ्यन्त इति । कर्मशक्तिप्रधानत्वादिति भावः । स्वरे चेति । स्वरे इत्यवधारणाद्यथा

१ एवं क्वचित् । 'यदाद्यन्यान' पा० । २ निघातकारणे' पा० । ३ 'अन्यपरस्य'पा० ।

जाये स्वो रोहावेहि॥ अथेदानीं रोहावेत्यनेन युक्ते 'एहीं'त्यस्य कस्मान्न भवति ?, लोट्चगत्यर्थलोटा युक्त इति प्राप्नोति ॥ न हि रुहिर्गत्यर्थः ॥ कथं ज्ञायते ?॥ यदयं 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चे'ति पृथग्रुहिग्रहणं करोति ॥ यदि न गत्यर्थः,—आरोहन्ति हस्तिनं मनुष्याः, आरोहयति हस्ती स्थलं मनुष्यान्',—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि

प्र ] कारकं, नाऽपि तन्निमित्तम्। स्वरे चे पूर्वाङ्गवत्त्वविधिर्नाऽविद्यमानवत्त्वे।

अथेदानीमिति। आङ् परस्येहीत्यस्य निघात इष्यते, न च प्राप्नोति, 'लोट् चे'ति निषेधात्। केवलोऽपि रुहिश्छन्दसि गत्यर्थो दृश्यत इत्याह इणा योगो, न रुहिणा। छन्दसि परेऽपी'तिवचनाद्यदि रुहिणाऽऽटो योगः स्यात्तदा नाना वाक्यत्वादाङो निघातो न स्यात्। ननु नित्यत्वादेकादेशे कृते व्यपवर्गाऽभावा दुभयत आश्रयेऽन्तादिवद्भावनिषेधाच्च निघातो न प्राप्नोति। एवं तर्ह्यस्मादेव भाष्यकारविचारादनुमीयते– प्राङ्निघातस्तत एकादेश'इति। न हि रुहिरिति। येषामुपसर्गयोगाद्विना गतिप्रतीतिहेतुत्वं ते गत्यर्थाः। रुहिस्तूपसर्गयोगे गति वाचा। यद्वाऽवष्टम्भवाची रुहिः। गतिस्तु तदवयवक्रियेति भावः। यदयमिति। अनुपसर्गस्य रुहेरकर्मकत्वात्कर्तरि क्त सिद्ध, सोपसर्गस्य तु गत्यर्थत्वादिति किं रुहिग्रहणेन ?। तत्क्रियमाणमुपसर्गयोगेन विना ये गत्यर्थास्ते गत्यर्थग्रहणेन गृह्यन्ते। अथ वा रुहिरवष्टम्भवाची, तदवयवस्तु गतिः। सत्यपि वा गत्यर्थत्वे गत्यर्थग्रहणेन रुहिर्न गृह्यते इति ज्ञापयति। यदीति। उपसर्गयोगेऽपि ये यदर्थास्ते तदर्थग्रहणेन गृह्यन्ते यथा हरतिरन्यपूर्वः प्रत्यवसानार्थ इति तद्ग्रहणेन

उ ] पत्वादिकं प्रति नानिष्ठा एवमविद्यमानवत्त्व प्रयत्नाति भावः। ननु केवलस्य रुहेर्गत्यर्थ त्वाऽभावादिह च तस्यैकत्वेन परत्र शुनोऽप्याङः पूर्वत्र योग्यत्वम् इति समानवाक्यत्वाऽ भावादाङाश्रयनिघातः 'इहोत्यस्य न स्यादत आह–केवलोपीति। आङो निघातो न स्यादिति। आङ् परस्य इहान्यस्य निघातो न स्यादित्यर्थः। प्राङ्निघात इति। नेहस्य परस्येति सामानाधिकरण्य शब्दमिति भावः। उपसर्गयोगे इति। आरोहन्ति हस्तिनमित्यादौ केवलोऽपि रुहिर्गत्यर्थः। 'छन्दसि दृश्यत' इति प्रायुक्तेन विरोधा त्सहानान्तमाह–यद्वाऽवष्टम्भेति। हस्तिनमुपरि गत्वा स्वाश्रयेन दृढाश्रयमादिति भावः। एवञ्च प्राधान्येन न गत्यर्थत्वमिति तात्पर्यम्। सत्यपीति। कदाचिदपि रुहेर्गतौ वृत्ति प्रयोगादिति भावः। उपसर्गयोगेऽपीति। इदं चोक्तोपसर्गविशिष्टस्याप्युपलक्षणम्। कथं

१ 'रुहि' पा०। २ 'स्वरे वा' इति पाठ शोधित इति पुस्तके।

स्तौ स पा'विति कर्मसंज्ञा न प्राप्नोति। तस्मान्नैतच्छक्यं वक्तुं 'न रुहिर्गत्यर्थ' इति ॥ कस्मात्तर्हि रोहयतेरनेन युक्तं 'गत्यर्थे'त्येतस्य न भवति ? ॥

छान्दसत्वात् ॥ [ यद्धितुपरं छन्दसि ] ॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ।८।१।५७।

॥ * ॥ 'आम्रेडितेष्वगते' 'सगतिरपि ति'ङित्यत्र गतिग्रहणे उपसर्गग्रहणम् ॥*॥ 'आम्रेडितेष्वगते' 'सगतिरपि ति'ङित्यत्र गतिग्रहणे उपसर्गग्रहणं द्रष्टव्यम् । इह मा भूत् । शुक्लीकरोति चन कृष्णीकरोति चन । यत्काष्ठं शुक्लीकरोति यत्काष्ठं कृष्णीकरोति ॥ अपर आह—' सर्वत्रैवाष्टमिके गतिग्रहणे उपसर्गग्रहणं द्रष्टव्य—'गतिर्गतौ' 'तिङि चोदात्तवति' वर्ज' 'मिति ॥ [चनचिदि]।

## यद्वृत्तान्नित्यम् ।८।१।६६।

प्र ] गृह्यते। तथा च 'हक्रोरन्यतरस्या'मित्युभयत्र विभाषा प्रतिपादिता। तस्माद्रुहर्गत्यर्थग्रहणेनाऽनर्थकाभ्युपेयं ग्रहणं। केवलोऽपि रुहिश्छन्दसि गतौ प्रयुज्यत इति प्रागेवोक्तं। गतिरेव रुहेरर्थोऽनष्टम्भस्तु तत्प्रक्रमित्यभ्युपेयं। 'गत्यर्थाकर्मक'त्यत्र तु रुहिग्रहणं प्रपञ्चार्थम् ॥ [ यद्धितुपरं छन्दसि ] ॥

चनचिदिव। शुक्लीकरोति चनेति। 'अगते'रिति प्रतिषेधाऽभावादत्राऽनिघातो भवत्येव। यत्काष्ठमिति। शुक्लीशब्दस्य (तु) निघातो न भवति। सर्वत्रेति। चादिषु च 'चवायोगे प्रथमे'त्येतयोरगतिग्रहणमनुवर्तत इति तत्राप्युपसर्ग एव गतिः। [ चनचिदिवगोत्रादितद्धिता ] ॥

उ ] तर्हि रोहत्यत्र त्रिलोऽभक्तौ गतिग्रहणमित्याह—केवलोऽपीति। अन्यारोपित प्रेरणं 'आरोहयति हस्ती स्थल'मिति भाष्योदाहरणं। तत्र स्थलशब्देन हस्त्युपरि नियमाणं काष्ठादिमयमुच्यते। सौकर्यार्थमित्यर्थः प्रेरणाद्विवक्षाऽऽदि वृद्धया द्विकर्मकत्वं प्रपञ्चार्थमिति। तेन पक्षान्तराय नाभिनिवेष्टव्यं भाष्यविरोधादिति तात्पर्यम्। भाष्ये—छान्दसत्वादिति। सर्वविधीनां छन्दसि व्यवस्थितत्वादित्यर्थः। [ यद्धितुपरम् ] ॥

चनचिदिव। अगतेरिति। ऊर्यादीनां गतिसंज्ञैव, नोपसर्गसंज्ञेति भावः। प्रतिषेधाऽभावादिति। निघातप्रतिषेधस्य प्रतिषेधाऽभावादित्यर्थः। 'अनिघातो भवत्येवे'ति पाठः। शुक्लीशब्दस्येति। यद्वृत्तान्नित्यमिति नित्यनिघातनिषेधे प्राप्ते 'सगतिरपी'त्यनेन पुनर्विधीयते। ततोपसर्गग्रहणव्याख्यानस्य प्रतिषेध एवेत्यर्थः। [ चनचिदिव ] ॥

१ अयं पाठः भाष्ये दृष्टः। २ 'कर्तव्यम्'। ३ 'काष्ठं' 'काष्ठं' पा०। ४ 'अभ्युपेत्य' पा०।

॥ ॰ ॥ सुपि कुत्सन क्रियाया मकारलोपोऽतिङीति चोक्तार्थम् ।
पृतिश्च चानुबन्धो विभाषित चापि बह्वर्थम् ॥ १ ॥ ॰ ॥

## गतिर्गतौ ।८।१।७०।

गतावितिः किमर्थम् ? ॥ प्रपचति । प्रकरोति ॥ ॥ गतेरनुदात्तत्व गतिग्रहणानर्थक्यं तिङ्ग्रहणावधारणात् ॥ ॥ गतेरनुदात्तत्वे गतिग्रहणमनर्थकम् ॥ किं कारणम् ? ■ 'तिङ्ग्रहणावधारणात्' । तिङि चोदात्तवती'त्येतन्नियमार्थं भविष्यति—'तिङ्युदात्तवत्येव गतिरनुदात्तो भवति नान्यत्रे'ति॥ [॥*॥ छन्दोर्थ तु ॥ ॥ ] ॥ छन्दोऽर्थं तर्हि गतिग्रहण कर्त्तव्यम् । छन्दसि गतौ परतो

प्र ] ऽभावात्कथ स्यात्? । एव तर्हि वर्तेस्तिविति तिङन्तो बाहुल्यादुपाय । विभाषितमिति । बह्वर्थे तिङन्त विभाषा निहन्यते, यदा च तस्य निघातस्तदा पृतिरन्तोदात्त । अतिङीति । तिङन्ते मलोपो न भवति दारुण पचती ति । उक्तार्थमिति । आचार्यपरपराकथितप्रयोजनमेतदित्यर्थ । [कुत्सने च सुप्यगोत्रा]।

गति । गते शुद्धे वा तिङन्ते प्रयोगो गतियुक्ते वा । एव कृदन्ते । इति शब्देषु तु गवाश्वादिषु क्रियाया अभावान्नाऽस्ति गत प्रयोग । नन कृदन्ते सगतावगती च कृत्स्वरथाथादिस्वरगतिस्वरेषु कृतेषु शेषनिघातेन गतेर्निघातस्य भावात्तिङि चोदात्तवतीति नियमादनुदात्ते तिङन्ते तदप्रसङ्गात्पारिशेष्या द्गतावेव भविष्यतीति मत्वाह—गतावितिः किमर्थमिति । 'तिङ्युदात्तवत्येवे'ति विपरीतनियमस्तु न भवति, 'तिङेवोदात्तवति नाऽन्यत्र प्रकारे' इत्यादा वि-

ड ]राङ्क्षाऽत्र वाजमिति । न तिङन्त इति । क्रिया तिङ्विधानादिति भाव । बाहुल्यादिति । तत एव च गुणाऽभावोऽपि बोध्य । तिङन्ते मलोप इति । मलोपश्चे नि वार्तिकोक्तो मलोपस्तिङन्ते नेष्ट । एव चाऽस्य वाक्यस्य विशिष्टविषयत्व यदुक्त तदाचार्य परपराकथित वा प्रमाणमित्यर्थ । [ कुत्सने च सुप्यगोत्रादौ ] ॥

गतिर्गतौ । ननु गतावित्यस्याऽभाव प्रपचती त्यादावपि निघात स्यादत आह—गते शुद्धेवेति। एव कृदन्तेपीऽति। शुद्धे गतियुक्ते वत्यर्थ । अभावात्—असत्त्वे । गतिस्वर —गतिरनन्तर इति । ■ च कृदन्ते गतिपरगतिनिघातस्य फलाऽभाव । तिङ तेऽप्युदात्तव तीत्युत्तरसूत्रेण भवत्येव स । अनुदात्ते तु नियमाश्रयणादप्रवृत्तिरित्याह—तिङि चेति । अनन्तरस्य वेति । यथाऽनन्तरस्य नियमेन व्यावृत्तिर्न तु शेषनिघातस्य तथा व्याख्यातुमुचित नाऽयथाऽन्यो वा विपरीतनियमो नेत्यर्थं । आ मन्द्रैरिति प्रयोजन पाक्षिक

■ 'भवति नान्यत्रेति' इति पा० । २ ह्द वार्तिकं क्वचिदपि नास्ति मध्ये त्रुटत स्यात् ।

सम्बन्धस्तमभ्यन्तरीकृत्य धातुः साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयं, यो हि मन्यते—'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति। 'आस्यते गुरुणे'त्यकर्मकः 'उपास्यते गुरु'रिति केन सकर्मकः स्यात्? ॥

गतिना तु[3] विशिष्टस्य गतिरेव विशेषकः।
साधने केन ते न स्याद्बाह्यमाभ्यन्तरो हि सः ॥ १ ॥

निङि चोदात्तवति। ८।१।७१।

निङ्ग्रहणं किमर्थम्? ॥ ॥ निङ्ग्रहणमुदात्तवतः परिमाणार्थम् ॥ ॥

प्र] विशेषं लभते, अपि तु विशिष्टैव क्रिया साधनेनोपादीयते, ततश्च प्रयोक्ता विशिष्टाया क्रियायाः साधनेन सम्बन्धं प्रतिपादयितुं सोपसर्ग(स्य)समुदायं प्रयुङ्क्ते। यथैव गमनस्येदं साधनं न पाकादेरिति प्रतिपादनाय धातोः प्रयोग एव मागमनस्येदं साधनं न गमनस्येति प्रतिपादयितुं सोपसर्गस्य प्रयोगः। ततश्च परमार्थतो धातूपसर्गसङ्घात एव क्रियावाची, पृथगुपदेशस्तु धातूपसर्गयोरडादिव्यवस्थार्थः। ततश्चाऽन्तरङ्ग उपसर्गयोगो बहिरङ्गः साधनयोगः। आस्यत इति। केवल आसिरकर्मक इति तस्मात्कर्तृभावयोर्लकार उत्पद्यते। उपसर्गयोगे त्वर्थान्तरवृत्तित्वात्सकर्मकत्वात्कर्मणि लकारोत्पत्तिः। यदि तु प्राक् साधनेन सम्बन्धः स्यात्ततोऽकर्मकत्वात्कर्मणि लकारो नोपपद्यते। तस्मात् क्रियाविशेषणप्रतिपादनाय 'पूर्वं धातुरुपसर्गेण युज्यते' इत्यादौ सन्दः प्रत्यग्र निर्वाहतावितिनकर्तव्यम्। गतिनेति। ऊर्ध्वतादिविशिष्टा हरतिक्रिया गतिना विशेष्यतेऽभ्युद्धरतीत्यनेनार्थः। साधन इति। गताविप्यस्मिन्नागति आ सन्दरे त्यत्र सन्दशब्दे साधनाभिधायिनि परतो निघातः कथं न स्यादिति चोद्यम्। उत्तरमाह—बाह्यमिति। साधनं बाह्यं, तत्सम्बन्धस्य बहिरङ्गत्वात्। धातूपसर्गयोस्त्वन्तरङ्ग इति सन्दः प्रत्यग्रनिर्वाहिणाभावः ॥ [ गतिर्गतौ ] ॥

तिङि चोदा। निङ्ग्रहणमिति। या क्रिया यत्क्रिया, यत्क्रियया युक्ता

... लोक इति शेषः।
... ते त्विति। उप
... कथं तत्पूर्वं

प्रत्ययोत्तरम्। निघातः कथं न स्यादिति। तेनेत्यत्र,—साधने परतः केन न स्यादित्यन्वयः। धातूपसर्गयोरिति। तदर्थयोरित्यर्थः। [ गतिर्गतौ ] ॥

१ 'नन्तर कृत्वा' 'भ्यन्तरे' पा०। २ 'युक्ते'। ३ 'गतिना तु विशि'। ४ 'धातूपसर्गं' पा०।

तिङ्ग्रहणं क्रियते ॥ [ किं प्रयोजनम् ? ] । 'उदात्तवत परिमाणार्थम्' । तिङ्ग्रहणमुदात्तवति यथा स्यान्मन्द्रशब्दे मा भूत्—आ मन्द्रैरिन्द्र हरिभिर्याहि । ॥ * ॥ यद्योगाद्गतिः ॥ * ॥ यत्क्रियायुक्ताः प्रति गत्युपसर्गसञ्ज्ञे भवतः न चाङो मन्द्रशब्दं प्रति क्रियायोगः ॥ किं तर्हि ? ॥ 'याहि'शब्दं प्रति ॥ ॥ ॥ यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः ॥ * ॥ यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः स्यात् । यत्प्रकरोति । तस्मात्तिङ्ग्रहणं कर्तव्यम् ॥

यदि तिङ्ग्रहणं क्रियते आमन्त्रे न प्राप्नोति,—प्रपचतितरां प्रजल्पति

प्र ] यत्क्रियायुक्ता इत्याश्रयणादव्याप्तिर्न भविष्यति, क्रियमाणे च तिङ्ग्रहणेऽव्याप्तिः, 'प्रपचतितरा'मित्यामन्त्रे निघाताऽप्रसङ्गादिति प्रश्नः । परिमाणार्थमिति । असति तिङ्ग्रहणे सर्वस्मिन्नुदात्तवति निघातः स्यादिति तत्परिच्छेदाय तिङ्ग्रहणमित्यर्थः । आ मन्द्रैरिति । मन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः । यद्योगादिति । गतिशब्दः पित्रादिशब्दवत्सम्बन्धिशब्दत्वात्सम्बन्धिनमाक्षिपतीति क्रियावाचिन एवोदात्तवतो ग्रहणं नान्यस्येत्यर्थः । प्रत्ययोदात्तत्व इति । धातुरेव क्रियावाचित्वाद्गतिसञ्ज्ञानिमित्तमिति धातावेवोदात्तवति गतेर्निघातः स्यान्न तु प्रत्यये । तिङ्ग्रहणात्तु परिमाणार्थात्प्रत्ययोदात्तेनाप्युदात्तवति तिङन्ते गतेर्निघातो भवति । प्रपचतितरामिति । यदा गतिकारकोपपदानां कृद्भिरेव समासो नान्येन स च प्राक् सुबुत्पत्ते'रिति दर्शनं तदाम स्वरेणोदात्तवत्यामन्त्रे गतेर्निघात इष्यमाणस्तिङ्ग्रहणे सति न प्राप्नोति, अतिङन्तत्वादामन्त्रस्य । यदा त्वविशेषेण 'गतीनां समासः प्राक्सुबुत्पत्ते'रिति पक्षस्तदाऽऽमन्त्रेन प्रशब्दस्य समासेऽव्ययपूर्वपद

उ ] तिङि चो । ननु यस्य वाच्या क्रिया यत्क्रियेत्याश्रयणे क्रियावाचकधातावेवोदात्तवति स्यात् 'यत्प्रपचता'स्यादौ, 'यत्प्रकरोति'त्यादौ प्रत्ययोदात्तवति तिङ्ग्रहणमवश्यं कर्तव्यमत आह—यत्क्रियेति । अत्र षष्ठ्यर्थं प्रति गतित्वं न शब्दं प्रति, तदर्थे धात्वोऽपवा चद्योतकशब्दे परत्वं सार्थे त्रिधा समान क्रियाप्रधाने सर्वत्रोदात्तवति निद्दर्शनायमन्यपि तिङ्ग्रहणेऽव्याप्त्यभाव इत्यर्थः । 'आमन्त्रे निघाते' इति पाठ । 'आमन्त्रेण' इति स्वपाठः । तत्परिच्छेदायेति । विशेषावस्थापनायेत्यर्थः । सम्बन्धिशब्दत्वादिति । क्रियायोगे गतिसञ्ज्ञाविधानादित्यर्थः । धातुरेवेति । यस्य वाच्या क्रियेत्याश्रयणादिति भावः । एवञ्च 'यत्प्रपचन्ती'त्यादावेव स्यादिति तात्पर्यम् । यदा त्विति । तदा तत्राऽव्याप्तिरिति भावः । शेषनिघातेनेति । एवञ्चोदात्तवत्परत्वाऽभावात्तस्य तत्र प्राप्तिरिति भावः । वस्तुतोऽत्र समासो

१ इदं सूत्रम् । २ भाष्यमित्यर्थः । वार्तिकमित्यपरे ।

सामान्यवचनमिति शक्यमवक्तुम् ॥ कथम् ? ॥ 'विभाषित विशेषवचन' इत्युच्यते, तेन यत्प्रति विशेषवचनमित्येतद्भवति तस्य भविष्यति ॥ किं च प्रत्येतद्भवति ? ॥ सामान्यवचनम् । अपर आह—"विशेषवचन इति शक्य मवक्तुम् ॥ कथम् ? ॥ 'सामान्यवचन विभाषित'मित्युच्यते तेन यत्प्रति सामान्यवचनमित्येतद्भवति [ तस्य भविष्यति ]॥ किं च प्रत्येतद्भवति ? ॥ विशेषवचनम् । सामान्यवचन विभाषित विशेषवचन इति[1] ॥

॥ * ॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये अष्टमा ध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ पादश्च समाप्तः ॥*॥

## पूर्वत्राऽसिद्धम् ।८।२।१।

येयं सपादसप्ताध्यायी अनुक्रान्ता एतस्यामयं पादोनाऽध्यायोऽसिद्धो

प्र.] वैयाकरणे'त्यत्र नित्य । सामान्यवचनमिति । 'विशेषवचन'इत्यस्य पदेन सम्बन्धात्पर्यायस्य विशेषवाचित्वाऽभावात्पूर्वसूत्रार्थमपि सामान्यवचनग्रहणं न कर्तव्यम् 'अघ्न्ये देवी'त्यादौ सर्वथामामन्त्रितानाद्युदात्तत्वसिद्धये॥*॥ इति कैयटकृते महाभाष्यप्रदीपेऽष्टमस्य प्रथमे द्वितीयमाह्निकम् ॥ पादश्च प्रथमः ॥*॥

पूर्वत्रासिद्धम् । येयमिति । वृत्तिग्रन्थाक्षेपेण शास्त्राऽसिद्धत्वमाश्रीयते न तु कार्याऽसिद्धत्वं, शास्त्रस्य सन्निवेशात् पौर्वापर्यसम्भवात्, कार्याणां तु प्रयोग समवायात्पौर्वापर्याऽयोगात् । शास्त्रद्वारेण वा कार्याणां पौर्वापर्यं शास्त्रस्य मुख्यं पौर्वापर्यमिति तस्यैव ग्रहणं न्याय्यमित्युत्सर्गलक्षणकार्यसिद्धिरपि भवतीति दर्शयति । एतच्च सूत्रमात्मानं विहाय सूत्रान्तराणामसिद्धत्वं प्रतिपादयति न त्वा त्मनः, बोधकस्य बोध्यत्वाऽभावात् । एतस्य चाऽसिद्धत्वे सर्वथा सिद्धत्वात् सूत्रारम्भ एवाऽनर्थकः स्यात् । यथा 'सर्वं मिथ्या ब्रवीमी'ति वाक्यं वाक्यान्तराणामेव मिथ्यात्वं प्रतिपादयति । एतस्याऽपि मिथ्यात्वे वाक्यान्तराणां मिथ्यात्व

उ] विशेषवचन इति । अस्यैव पूर्वेण सम्बन्ध इति भावः ॥*॥ इति श्री नागोजी-भट्टकृते भाष्यप्रदीपोद्योते अष्टमस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्चायं समाप्तः ॥
पूर्वत्रासिद्धम् । सूत्रार्थमात्रकथनरूपं भाष्यं वाऽस्पष्टत्वादत एतत्कथनं निष्फलम् आह—वृत्तिग्रन्थोपक्षेपेणेति । अस्य च दृश्यमानं दूषणं तन्निरस्यं । उपक्षेप — तिरस्कार । अत एवाग्रिमग्रन्थनिरुक्तिरनुपपन्ना । कार्यस्य प्राधान्येऽपि कार्याऽसिद्धत्व

1 इद वार्त्तिकम् ।

सुपर्वाणि । णत्वे कृते 'नोपधाया' इति दीर्घत्वं न प्राप्नोति । असिद्धत्वाद्भवति ।

## नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।२।२।

'सुब्विधिं प्रति नलोपोऽसिद्धो भवती'त्युच्यते तेनेह राजभिः तक्षभिरिति, नलोपे कृते 'अत' इत्यैस्भावो न स्यात् । इह तु खलु राजभ्यां तक्षभ्यां राजसु तक्षस्विति,—नलोपे कृते दीर्घत्वैत्वे प्राप्नुतः ॥ नैष दोषः । ॥ * ॥ सुब्विधिरिति सर्वविभक्त्यन्तः समासः ॥ * ॥ [ सुब्विधिरिति सर्वविभक्त्यन्तः समासः ] । सुपो विधिः सुब्विधिः, सुपि विधिः सुब्विधिरिति ।

---

प्र ] विभक्तौ लुकाद्यन्ते कृते परत्वान्नित्यत्वाद्वा वप्रसङ्गाददकारान्तत्वनिबन्धनस्मायाद्यप्रसङ्गः । उत्पन्नात्वस्याऽसिद्धत्वादप्रवर्तनात्पूर्वं स्मायादयः पश्चाल्लुत्वम् ।

नलो । सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्ताऽवयवत्वात् सर्वविभक्त्यन्तः । अथ वा अर्श आदित्वादच्प्रत्ययः,—सर्वविभक्त्यन्तोऽवयवोऽस्यास्तीति । सर्वग्रहणं चाऽनन्तरोपलक्षणं द्वितीयाद्यसम्भवात् । ननु चैकार्थेन शब्देन भाव्यमिति कथं सर्वविभक्त्यन्तत्वमाश्रीयते ? । उच्यते, प्रवृत्तिनिमित्तविशेषाऽनपेक्षया सुब्विधिशब्दवाच्योऽर्थः सुब्विधिरित्याश्रीयते । अथ वा सम्बन्धसामान्ये षष्ठी तया षष्ठीसमासः क्रियते । न तु स्थान्यादेशसम्बन्ध एवाश्रीयते, तेन सुपि यो विधिः स सुपः सम्बन्धी भवतीति तत्राऽप्यसिद्धत्वं भवति । सर्वविभक्त्यर्थाऽन्तर्भावाच्च सर्वविभक्त्यन्त उच्यते । न चाऽत्र सुपः कार्यं विधीयते । तत्र षष्ठी स्थानेयोगेत्यस्योपस्थानाऽभावः । 'उदीचामातः स्थाने' इति स्थानग्रहणाज्ज्ञापकादस्याः परिभाषाया अप्रवृत्तिः । यत्र त्वेषा परिभाषा प्रत्याख्याता तत्राऽपि सम्बन्धसामान्यस्योपादानात्तस्य चैकत्वादयं सम्बन्धः सन्निकृष्टोऽयं विप्र-

---

उ ] यप्रसङ्ग इति । उत्वस्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाऽदन्तत्वाभावादिति भावः ।

नलोप सु । भाष्ये दीर्घत्वैत्वे प्राप्नुत इति । न हीमे सुपो विधीयेते इति भावः । ननु समासस्य सर्वविभक्त्यन्तत्वमसम्भवीत्यत आह–सर्वविभक्त्यन्तावयवत्वादिति । नन्वेवं सर्वविभक्त्यन्तावयवत्वं समासस्याऽनुपपन्नमत आह–सर्वविभक्त्यर्थेति । तेन षष्ठीति । विध्यङ्गभूतपरिभाषाया साक्षात्तद्विशेषणे एव प्रवृत्तेरौचित्यादिति भावः । अत्रैवार्थे लिङ्गमप्याह–उदीचामिति । क्वचित्तु लक्ष्यानुरोधाद्बलवत्यपि तत्रापि परिभाषायाः प्रवृत्तिः, यथोदात्तस्वरितयोरित्यादौ । वस्तुत इदं चिन्त्यमित्यसकृदावेदितम् । यत्र त्वेषेति । षष्ठी स्थाने इत्येषेत्यर्थः । सम्बन्धसामान्यस्येति । सम्बन्धेन सम्बन्धस्य षष्ठ्या

---

१ केचित्तु नेदं वार्त्तिकं, व्याख्यानादर्शनात् । भाष्यमेवेदमित्याहुः । २ इदं तु स्यात् ।

अथ सञ्ज्ञाविधौ किमुदाहरणम् ? । पञ्च सप्त ॥ पञ्च सप्तेत्यत्र नलोपे कृते 'ष्णान्ता ष'डिति षट्सञ्ज्ञा न प्राप्नोति । असिद्धत्वाद्भवति ॥
॥ ५ ॥ सञ्ज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वाल्लोपस्य ॥ * ॥ सञ्ज्ञाग्रहणं चाऽनर्थकम् ॥ किं कारणम् ? ॥ 'तन्निमित्तत्वाल्लोपस्य' । नाऽकृतायां षट्सञ्ज्ञायां जश्शसोर्लुक्, न चाऽकृते लुकि पदसञ्ज्ञा, न चाऽकृतायां पदसञ्ज्ञायां नलोपः प्राप्नोति । तदेतदानुपूर्व्या सिद्धं भवति ॥ इदं तर्हि प्रयोजनं पञ्चभिः सप्तभिरिति । 'षट्त्रिचतुर्भ्यो हलादि'ः 'झल्युपोत्तम'मित्येष स्वरो यथा स्यात् ॥
॥ ॥ स्वरेऽवधारणाच्च ॥ * ॥ स्वरेऽवधारणाच्च सञ्ज्ञाग्रहणमनर्थकम् ।

प्र ]कृष्ट इति भेदनिबन्धनो व्यवहारो नास्ति । पञ्चेति । लौकिकप्रयोगात्प्रकाराऽसम्भवं शास्त्राच्च विभक्त्यभावं मन्यते । तन्निमित्तत्वादिति । यथा विभक्तिलोपः शास्त्राधीन एव नलोपः ततश्चानुपूर्व्या सिद्धमेतदित्यर्थः । षट्त्रीति । अन्यथा नलोपे कृते नान्तत्वाऽभावादसत्यां षट्सञ्ज्ञायां 'झल्युपोत्तम'मिति स्वरो न स्यात् । ततश्च 'न सङ्ख्याया' इत्याद्युदात्तं पदं श्रूयते । न चाऽत्र भूतपूर्वगतिराश्रयितुं शक्यते, षट्सञ्ज्ञान्यस्य 'पङ्क्ति'रित्यादौ सावकाशत्वात्, 'झल्युपोत्तम'मित्यस्यापि तिसृभिश्चतसृभिरित्यादौ । समुदाये ह्यनुवर्त्तमाने केषु चिदवयवेषु कृतार्थं शास्त्रं तद्द्वारेण समुदाये प्रवृत्तमेव भवति । तथा च 'वान्यस्य संयोगादे'रित्यत्र ध्वादिनिवृत्त्यर्थमन्यग्रहणं [कृतम्] । अत एव वार्तिककारः परिहारान्तरमाह—स्वरेऽवधारणाच्चेति । स्वरे लोपस्याऽसिद्धत्वमुक्तमेवेति स्वरार्थायां षट्सञ्ज्ञायामसिद्धत्वं न वक्तव्यम् । केचित्तु 'पञ्च ब्राह्मण्य' इत्यादौ 'न षट्स्वस्रादिभ्य' इति टाप्प्रतिषेधाय षट्सञ्ज्ञाया नलोपस्याऽसिद्धत्वमुच्यते इत्याहुः । तत्र नान्तत्वात्पूर्व

उ ]धत्वमिति भावः । नास्तीति । तेनाऽन्तरङ्गत्वात्स्थानमस्थ एव षष्ठ्यर्थं स्यादिति न शङ्कनीयमिति भावः । ननु पक्षे त्वत्र प्रत्ययलक्षणेन पदसञ्ज्ञालुकि ततो नलोप इति नलोपे षट्त्वस्य न सम्भव आह—लौकिकादिति । 'नलोपे कृत' इति भाष्यस्य लोकतो नकारश्रवणे कृत इत्यर्थः । एव नलोप इति । लौकिकप्रयोगस्याऽसिद्धत्वमपि दुर्वचनम् शास्त्रीयत्वादिति भावः । ननु षट्विषयक 'झल्युपोत्तम'मित्यचरितार्थमेवाऽत आह—समुदाये हीति । तथा चेति । अन्यथा स्थानिवत्स्वर चरितोऽयम्याऽचरितार्थत्वादेव तत्र नित्यसिद्धावन्यग्रहणवैयर्थ्यं स्पष्टमेव । ज्ञापिते तु द्वाविंशे तस्य चारितार्थ्यात्स्थानी परत्वादिकस्य स्यादित्यन्यग्रहणम् । पञ्च ब्राह्मण्य इत्यादाविति । यद्यपि

१ पुनान्यादीत्यर्थः । २ अत्र पदं कचित्र । ३ नित्यमनन्तरादो पा० ।

रनिमित्त तद्विघातस्ये'ति ॥ इदं तर्हि प्रयोजन 'कृतानि वक्ष्यामी'ति । इह मा भूत्–ब्रह्महच्छत्रम् । भ्रूणहच्छाया । न ह्येष सन्निपातलक्षणो नलोप ॥

न मु ने ।८।२।३।

इह 'ने यत्कार्यं प्राप्नोति तस्मिन् मुभावो नाऽसिद्ध' इत्युच्यते नाभाव श्चैव तावत् प्राप्नोति ॥ एवं तर्हि,–॥ ~ ॥ न मु टादेशे ॥ ॥ न मु टादेश इति वक्तव्यम् ॥ किमिदं टादेश इति ? ॥ टाया आदेश टादेश ॥ यदि तर्हि टाया आदेश इत्युच्यते टायामादेशोऽप्रतिषिद्ध भवति ॥ तत्र को दोष ?॥ 'अमुने'त्यत्र मुभावस्याऽसिद्धत्वादतो दीर्घो यञि सुपि चेति दीर्घत्वं प्रसज्येत ॥ नैष दोष [ 'टादेश' इति ] सर्वविभक्त्यन्तोऽयं समास –टाया आदेश टादेश , टायामादेश टादेश इति ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्त 'ने यत्कार्यं प्राप्नोति तस्मिन्मुभावो नासिद्ध इत्युच्यते नाभावश्चैव तावत् प्राप्नोती'ति ॥ नैष दोष । इहाश्रितेन षष्टि

प्र.]भाष्यकारस्तथैव व्याचष्टे–सन्निपातेति। इदं तर्हीति। नियमार्थमिदं–'कृल्लक्षण एव तुग्माभूत् , छलक्षणस्तु यथा स्या'दित्यर्थ । इह मा भूदिति। तुगभाव । नैष इति । पदसमाननिबन्धनत्वाभावाऽत्र बहिरङ्गो नलोप । [ नलोपः सु ] ॥

न मु ने। ने यत्कार्यमिति । भूतस्य सप्तमीनिर्देशो युज्यते । परसप्तमी च शास्त्रे प्रसिद्धेति निष्पक्षे नाशब्दे परतो यत्कार्यं प्राप्नोति तत्र मुभावस्य सिद्धत्व स्यादित्यमिति भाव । नाभावश्चैवेति । नाभाव कर्तव्ये मुभावस्याऽसिद्धत्वा द्विलक्षणो नाभावो न प्राप्नोति, ततश्च सुतरामवचनादमगत्व, नाभावस्यैवाऽभावात्, तस्य तस्तस्मिन्परत कार्यं प्राप्नोति यत्र मुभावस्य सिद्धत्वमुच्येत '। इहाश्रितेनेति । न निर्देशादेवाऽर्थप्रतिपत्ति , किं तर्हि आचार्य एव स्मरतीत्येतावत् सूत्रनिर्देशा-

उ ] ल्लक्षणे नलोपे तुगभावार्थं कृति तुग्ग्रहणं तेषामनभिधानमित्याशयात्। दश्याह–इदं तर्हीति। स्मरस्तु उच्यते–नैष इति। एतच्च नियमानुपयोग इति भाव । सुबन्तमिति। पदसमाननिमित्तत्वाद्बहिरिति तात्पर्यम्। तदेव प्रत्याख्यानं कृति तुग्ग्रहणमिति दिक् ।

न मुने । ननु ने कर्तव्ये इत्यर्थेन नाभाव सिध्यतीत्यत आह–भूतस्येति । तच्चे वोपस्थितिकापरत्वौचित्यादिति भाव । 'ने कर्तव्य' इत्यर्थे दीर्घमात्रस्यो दोष , उक्तार्थे तु नाभावाऽसिद्धिरिति तात्पर्यम । 'नाभाव तुल्कारत्वात्स्य व्यभिचारादाह– परसप्तमी चेति। तत्र लक्षणस्य इति भाव । न निर्देशादेवेति । न उदाहरणस्थे

१ भ्रूणहन्शब्दस्य । २ नैष सन्निपातलक्षण' । ३ इद क्वचित् । ४ असिद्धि ' सा०।

तेन निमित्तेन महता वो सूत्रनिबन्धेनाचार्याणामभिप्रायो लक्ष्यते । एवं देव ज्ञापयत्याचार्यो[3] 'भवत्यत्र नाभाव' इति यदयं न परताऽसिद्धत्वप्रतिषेधं शास्ति ॥ अथ वा 'द्विगतौ अपि हेतवो[4]' भवन्ति । तद्यथा—आम्राश्च सिक्ता पितरश्च प्रीणिता भवन्ति । तथा वाक्यान्यपि द्विगतानि दृश्यन्ते,—श्वेतो धावति, अलम्बुसानां यातेति, अथ वा 'वृद्धकुमारीवाक्यवद् द्विगतं द्रष्टव्यम्[5]' । तद्यथा—वृद्धकुमारीन्द्रेणोक्ता 'वरं वृणीष्वे'ति, सा वरमवृणीत—'पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीर'न्निति । न च तावदस्याः पतिर्भवति कुतः पुत्राः, कुतो वा गावः, कुतो धान्यम् ? ॥ तत्रानयैकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतं भवति । एवमिहापि नेऽसिद्धत्वप्रतिषेधं ब्रुवता नाभावोऽपि संगृहीतो भवति ॥ [ न सु नं ]

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।८।२।४।

॥ * ॥ यण्स्वरो यणादेशे स्वरितयणः स्वरितार्थम् ॥ * ॥ यण्स्वरो यणादेशे सिद्धो वक्तव्यः ॥ किं प्रयोजनम् ? ॥ स्वरितयणः स्वरितार्थं । स्वरितयण

र ] द्यपनीयते । तत्राश्च यदाचार्या ने यत्नमाह तेन सुभावस्य सिद्धत्वं शास्ति तस्माभावेऽपि सुभावस्य सिद्धत्वं स्मरतीति प्रतीयते । अथ वेति । तन्त्रप्रयोगद्वयमुच्चारितम् । अथ वैकस्यानेकार्थत्वमवादेनैकार्थप्रत्यायनमविरुद्धमित्यर्थः । वाक्यान्यपीति । न केवलमर्थस्याऽनेकप्रयोजनत्वमपि तु शब्दस्याऽपीत्यर्थः । श्वेतो धावतीति । किं नाताको धावति ? किंवर्णो धावतीत्येकमेवैकेनाऽनेकेन वा पृष्टः कौशलादेव कश्चिदर्थद्वयं प्रतिपादयति । अथ वेति । अन्यार्थस्याऽपि नान्तरीयकत्वादुपादानं दृश्यते । यथाऽग्निरान्यतामि युद्धे अचादितमपि पानीयमन्नमन्दानवेऽन्तर्भवति, एवमिहाऽपि नेपरतः प्राप्त कार्य प्रति सुभावस्य सिद्धत्वं ब्रुवताऽर्थान्तरेऽपि कर्तव्य सिद्धत्वमाश्रितम् । [न सु नं]

उदात्त । यण्स्वर इति । यण्निमित्तत्वात्तस्य सम्बन्धी स्वरो यण्स्वर ।

ड.] त्याः । किं नलुमानाद्यपेक्ष्य । सन्निधान्यतिभाषामनाश्रित्यत्वम् । तदपि नानिष्टप्रभिभाषाऽनित्यत्वे हस्वभावितिः वा भाव । द्यर्थं स्वरूप्रत्र्यश्रर्तीति वा । अस्तवदऽपि शब्दैक्यमितिपक्ष आह—अथवैकस्येति । न केवलमिति । दृष्टान्तार्थं तु भाष्य अर्थोपादानम् । नान्तरीयकत्वादिति । पूर्वमलुमानान्यर्थान्तरम्बुद्ध इदानीं तु नान्तरीयकत्वादिति भेदः ॥

उदात्तस्वरितयोर्यणः । ननु हलः स्वराऽभावाद्यण्स्वर इत्यनुपपन्नमत आह—

१ च । २ न्दन । ३ ज्ञाप॰ । ४ वार्तिक वार्तिकम् । ५ वार्त ६ ॰न्दस्यापि ।

स्वरितत्वं यथा स्यात्,—खलप्व्यटति खलप्व्यशानि ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । आहाऽयम्—'स्वरितयण' इति, न चाऽस्ति सिद्धे[1] स्वरिते, तत्राश्रयात्सिद्धत्वं भविष्यति[2] ॥*॥ आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरित दोषः ॥ [illegible] ॥ आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते दोषो[3] भवति—दध्याशा[4] मध्वाशा ॥ एवं तर्हि योगविभागः करिष्यते । [ 'उदात्तयण' ] उदात्तयणः परस्याऽनुदात्तस्य स्वरितो भवति । ततः 'स्वरितयण' । स्वरितयणश्च[5] परस्यानुदात्तस्य स्वरितो भवति । 'उदात्तयण' इत्येव ॥ अथ वा स्वरितग्रहणं न करिष्यते ॥ केनेदानीं स्वरितयणः परस्याऽनुदात्तस्य स्वरितो भविष्यति ? ॥ 'उदात्तयण' इत्येव ॥ ननु च स्वरितयणा व्यवहितत्वान्न प्राप्नोति ॥ 'स्वरविधौ

प्र ] खलप्व्यटतीति । खलं पुनातीति क्विप् । उपपदसमासः । कृत्स्वरेणान्तोदात्तत्वम् । ङौ परतः 'ओः सुपी'ति यणादेशः । तस्मात्परस्य ङेः सुप्त्वादनुदात्तस्योदात्तयणो हल्पूर्वादित्युदात्तत्वे प्राप्ते 'नोङ्धात्वो'रिति निषिद्धेऽनेन स्वारितत्वं, तस्य यणादेशे कर्तव्येऽसिद्धत्वात् स्वरितयणः परोऽटतिशब्दस्य 'तिङ्ङतिङ' इति निघातस्याऽऽभागे न भवतीति तस्य स्वरितत्वं न प्राप्नोतीति यणः स्वरस्य सिद्धत्वमुच्यते । केचिदाहुः—'एकपदाश्रयत्वादन्तरङ्गं स्वरितत्वं, पदद्वयाश्रितस्तु यण्बहिरङ्गः, ततोऽसिद्धं बहिरङ्गमन्तरङ्गे इति यणोऽसिद्धत्वात् पूर्वत्रेति निर्दिष्टविषयाऽभावादसिद्धत्वप्रसङ्गः स्वरितस्य नास्ती'ति । तदयुक्तम् । नाजानन्तर्ये बहिष्ट्वप्रकॢप्ति'रिति बहिरङ्गपरिभाषाया निषेधात्, इको यणचीति द्वयोरचोरानन्तर्याश्रयेण यण्विधानात् । दध्याशमिति । दधिशब्दो 'नब्विषयस्याऽनिसन्तस्ये'त्याद्युदात्तः । 'उदात्तादनुदात्तस्य स्वरितः' इति इकारः स्वरितः । आशाशब्दः 'आङ्याया अदिगाख्या चे'दित्यन्तोदात्तत्वादनुदात्तादिस्ततः आकारस्य स्वरितत्वप्रसङ्गः । उदात्तयण इत्येवेति । तेनोदात्तयण इत्येव यो निर्दिष्ट

उ ] यण्निमित्तत्वादिति । 'तिङ्ङतिङ' इति तिङन्तस्य निघातः । निघातस्येति पाठे अत्र अथवा निघातस्य इत्यर्थः । नाजानन्तर्य इति । वस्तुतस्त्वैकदेशिकोऽन्तरङ्गे बहिरङ्गपरिभाषाऽभावस्य 'षत्वतुकोरसिद्ध' इति सूत्रे भाष्ये वक्ष्यमाणत्वात् दुर्बलेन निर्दलः । असिद्धपरिभाषाया अनित्यत्वादत्राऽप्रवृत्तेश्च । भाष्ये—उदात्तात्स्वरित इति । 'उदात्तादनुदात्तस्ये'ति स्वरितत्वस्याऽपि सिद्धत्वात्तत्स्थानिकयणः परस्यापि स्वरितत्वप्रसङ्ग इत्यर्थः । तदाह—

१ 'स्वरिते सिद्धे' प० । २ 'भवतीत्या०' । ३ प्रायो दुष्टमिदं । ४ 'दध्याशा नि[illegible] पाठ पैत्तमन्त । ५ इदं दुष्टं भवेत् । ६ 'स्वरितस्य यण' प० ।

ननु चेदमस्ति यान्ता वान्तीति ॥ एतदपि निघाते कृते नाऽन्तरेणोदात्तानुदात्तयोरेकादेश इत्यन्त मनुस्वमन्तोदात्त भवति ॥ इदमिह सम्प्रधार्यं निघात क्रियतामेकादेश इति, किमत्र कर्तव्यम् ? ॥ परत्वान्निघात ॥ नित्य एकादेश,–कृतेऽपि निघाते प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ एकादेशोऽप्यनित्य । अन्यथास्वरस्य कृते निघाते प्राप्नोत्यन्यथास्वरस्याऽकृते निघाते । 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति' ॥ अन्तरङ्गस्तर्ह्येकादेश ॥ काऽन्तरङ्गता ? ॥ वर्णावाश्रित्यैकादेश पदस्य निघात ॥ निघातोऽप्यन्तरङ्ग ॥ कथम् ? ॥ उक्तमेतत्, 'पदग्रहण परिमाणार्थ'मिति । उभयोरन्तरङ्गयो परत्वान्निघातो निघाते कृते पुनरपि नाऽन्तरेणोदात्तानुदात्तयोरेकादेशम न्तोदात्त भवति । धातुस्वर ॥

एकानुदात्त–तुदन्ति लिखन्ति । उदात्तानुदात्तयोरेकादेशस्तस्य 'एकादेश उदात्तेनोदात्त' इत्येतद्भवति, तस्य सिद्धत्व वक्तव्य, तेन वर्त्यमानता यथा स्यात्। [एकानुदात्त][3]॥ सर्वानुदात्त ब्राह्मणास्तुदन्ति ब्राह्मणा लिखन्ति ।

प्र ] अत्र स्मार्वधातुकानुदात्तत्वस्य निमित्ताऽभावाद्धयोरुदात्तयोरेकादेश उदात्त इति भाव । शेषनिघात पदस्येति मन्यते । एतदपीति । प्रत्ययस्वरे सति निघात धातोरनुदात्तत्वात् । एवमनुम इति ज्ञापक स्थितमेव । एकानुदात्तेति । एकानुदात्तग्रहणना ऽनुदात्त पदमेकवर्ज मित्येव स्वरोऽभिधीयते । तत्र सूत्र–'सिद्ध त्वेकानुदात्त त्वा'दिति । तुदन्तीति विकरण उत्तमो स्मार्वधातुकमनुदात्त, तत्रोदात्तानुदात्तयोरेकादेशस्वरस्य धातुस्वरेऽसिद्धत्वाच्छेषनिघाताऽप्रसङ्गाद्धातो रप्यन्तोदात्तत्व स्यात् । ननु चोदात्तत्वाऽसिद्धत्वेऽपि स्वरितेन वर्तमानस्वरो भविष्यति ? । सत्र सिध्यति–यत्र स्वरितस्योदात्तता भवतीति पक्ष । यदा तु 'स्वरितापवाद उदात्त' इति पक्षस्तदैकादेशस्योदात्तत्व निर्धीयते, तस्य चाऽसिद्धत्वे स्वरान्तराऽभावाद्वर्त्यमानस्वरो न स्यादिति सिद्धत्वमुच्यते । ब्राह्मणास्तुदन्तीति । अत्रापि 'स्वरितस्य स्थाने उदात्त क्रियत' इति पक्षे उदात्तस्या

उ.] एकादेशोदात्तत्वस्येति शेष 'नुम' इत्यस्य नुम्प्रत्ययसूत्रे इते स्वरस्यार्थ 'निमित्ताऽभावा'दिति पाठ । निघाते इति । पदग्रहण परिमाणार्थमिति भाव । भाष्ये–निघातोऽप्यन्तरङ्ग इति । परिमाणत्वनोदात्त'दिति सिद्धेऽनवकाशत्वाऽस्य विधान'मिति भाव । धातुस्वरे इति । धातोस्स्वरूपे निघाते कर्तव्ये इत्यर्थ । सिद्धत्वमुच्यत इति ।

1 'तुदन्ति' पा० । 2 'अनुदात्तस्य' (६–१–१६०) इत्यनेन । 3 इद सूत्र ।

उदात्तानुदात्तयोरेकादेशस्तस्य 'एकादेश उदात्तेनोदात्त'इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ 'तिङ्ङतिङ' इति निघातो यथा स्यात् ॥ किमुच्यतेऽन्तरङ्ग इति ? ॥ यो हि बहिरङ्गोऽसिद्ध एवासौ भवति– प्रपचतीति, सोमसुपचतीति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । सर्वत्रैव नुम्प्रतिषेधो ज्ञापकः –'सिद्ध एकादेशस्वरोऽन्तरङ्ग' इति ॥

॥ ॥संयोगान्तलोपो रोरुत्वे हरिवो मेदिनं त्वा॥ ॥संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः॥ किं प्रयोजनम् ?॥ 'हरिवो मेदिनं त्वा'। संयोगान्तलोपस्याऽसिद्धत्वाद्धशि उत्त्वं न प्राप्नोति ॥ ॥प्लुतिश्च॥*॥ प्लुतिश्चोत्त्वे सिद्धा वक्तव्या। 'सुस्रोता३अत्र न्वसी'त्यत्र प्लुतेरसिद्धत्वादतोऽतीत्युत्वं प्राप्नोति। अप्लुतादप्लुत

प्र ] सिद्धत्वेऽपि स्वरितस्य निघातविधानादुदात्तस्याऽप्रयोग सिद्ध एवेति स्वरिताऽपवाद उदात्तग्रहणमिति दर्शनाश्रयेण सिद्धत्वमुच्यते । अन्यथोदात्तस्यानुदात्ताऽभावादुदात्त प्रयोगे श्रूयेत । प्रपचतीति । बाह्यपदापेक्षत्वादेकादेशस्य बहिरङ्गत्वात्तत्स्वरो बहिरङ्ग । तस्याऽसिद्धत्वाच्चोदात्तवत्त्वात् गतेर्निघातो न भवति । सोमसुत्पचतीति । 'तिङ्ङतिङ' इति निघात ईकारस्य न भवति । सर्वत्रैवेति । लक्ष्यापेक्षया सामान्यविषयमनुमानमाश्रीयते । अनुमानत्वाज्ज्ञापकस्य तत्रैकपदाश्रयत्वादेकादेशस्वर सिद्ध इत्यनुम इति प्रतिषेधेन ज्ञाप्यते । अथ वा 'एकादेश उदात्तेनोदात्त' इति परिभाषाश्रयितव्येति ज्ञाप्यते । यस्तु बहिरङ्ग एकादेशस्वरस्तस्याऽसिद्ध बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वं भवत्येव । हरिव इति । हरयोऽस्य सन्तीति मतुप् । छन्दसीर इति वत्वम् । नुम्संयोगान्तलोपरुत्वानि ।

उ.] स्वरितोदात्तप्रवृत्तिकाले तदेकवाक्यतापन्ननिघातस्याऽन्तरङ्गत्वात्पूर्वं प्रवृत्त्या सिद्धेरिदं प्रयोजनं चिन्त्यमिति कश्चित्तन्न एतस्य विभक्त्यन्तव्याख्याने एकादेशेन विकरणस्य विनष्टत्वात्तन्निमित्तनिघाताऽप्रवृत्तेरिति भाष्याशयात् । अन्यथेति । उदात्तस्याऽसिद्धत्वात्पूर्वं निघाते पश्चादेकादेशस्योदात्तत्वं स्यादिति भाव । सिद्धत्वे तु पश्चादेकादेशोदात्ते कृते तिङन्तनिघातप्रवृत्तिरिति सिद्धि । बाह्यपदापेक्षत्वादिति । तिङि चोदात्तवतीति सूत्रं तु 'यत्प्रपचती'त्यादौ तिङन्तनिघाताऽविषये चरितार्थम् । ईकारस्य नेति । स्वाश्रयमन्तरङ्गं बहिर्भूतेतिशब्दनिमित्ततया बहिरङ्गत्वेनैकादेशस्वरस्याऽसिद्धत्वेनाऽन्तरङ्गत्वात्पूर्वं निघाते पश्चादेकादेशस्वरेणोदात्तत्वादिति भाव । परिभाषाश्रयितव्या इति । चिन्त्यमेतत् उक्तयुक्तेः । हरिवानिति । 'मतुवसो'रिति रुत्वम् । अत्र 'रोरुत्व'इत्यस्य कर्तव्ये कृत

१ अयमंश प्राचि । २ 'त्वन्'स' पा० ।

॥ * ॥ श्चुत्वं धुट्त्वे ॥ * ॥ श्चुत्वं धुट्त्वे सिद्धं वक्तव्यम् । अट्श्च्योतति पट्[2] श्च्योतति । श्चुत्वस्याऽसिद्धत्वाद् ङ्ः सि धुडिति धुट् प्रसज्येत । ॥ * ॥ अभ्यासजश्त्वचर्त्वमेत्वतुकोः ॥ * ॥ अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धं वक्तव्यम् । बभणतुः बभणुः । अभ्यासादेशस्याऽसिद्धत्वादेत्वं प्राप्नोति । उच्चिच्छिषति । अभ्यासादेशस्याऽसिद्धत्वाच्छे चेति तुक् प्राप्नोति ॥ ॥ द्विर्वचने परसवर्णत्वम् ॥ * ॥ द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् । सय्यन्ता । सव्ँवत्सरः तँल्लोकं यँल्लोकमिति । परसवर्णस्याऽसिद्धत्वाद्यर इति द्विर्वचनं न प्राप्नोति ॥ * ॥ पदाधिकारश्चेत्त्वषत्व(ढत्वं[3])नत्वरुपत्वानुनासिक-

प्र.] अट् श्च्योततीति । 'श्चुतिर् क्षरणे' इति धातुः सकारादिः प्रतिज्ञायते, मधुश्च्युतमाचष्ट इति णिचि टिलोपे क्विपि 'मधुग्' इति रूपं यथा स्यात् । शकारादौ मधुडिति स्यात् । उच्चिच्छिषतीति । उछी विवासे । तुक्सन् इट् । 'अजादेर्द्वितीयस्ये'ति 'च्छि'शब्दस्य द्विर्वचनं, 'शर्पूर्वाः खयः' इति शेषः, छस्य 'अभ्यासे चर्चे'ति चकारस्तस्याऽसिद्धत्वाच्छे चेति पूर्वस्य तुक् प्राप्नोति । सँय्यन्तेति । अनुस्वारस्याऽयोगवाहानामविशेषेण प्रत्याहार उपदेशकरणचोदनाद्य-

उ.] प्रत्युदाहरणपरं भाष्यं सङ्गच्छते । बहिरङ्गत्वादिति । दूरादूतादित्यापेक्षत्वाच्चुत्वं बहिरङ्गम् । एतच्च छे चेति विषयनिर्देशश्चिन्त्यफलं आनन्तर्यात्पूर्वत्रासिद्धत्वस्यैवाऽनेन निषेधादिति भावः । अर्थकृतबहिरङ्गत्वानाश्रयणेन चिन्त्यमिदम् । अत्र चेदं भाष्यवार्तिकमपि मानम् । नन्वयं शकारादिरेव धातुरत आह—सकारादिरिति । तदुक्तं वृद्धैः—'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः ॥' इति । सकारादिप्रतिज्ञाया फलं दर्शयति—मधुगिति । यस्य 'हलो यो ल्यो'रिति लोपः । यत्तु वृत्तौ 'यस्य संयोगान्तलोपः' इत्युक्तं, तन्न, यणः प्रतिषेधात् । नच णिलोपस्य स्थानिवत्त्वात्कथं संयोगादिलोपः, 'पूर्वत्रासिद्धीय' इति तु 'तस्य दोषः' इत्यादिना निषिद्धमिति वाच्यं, 'कौतुस'मिति निर्देशात् । तस्यानाश्रयणे मानं च सकारप्रतिज्ञैव । केचित्तु सकारप्रतिज्ञाफलं 'सनुश्च्योतती'त्यत्र शितुग्व्यावृत्तिः । किंच संयोगान्तलोपे सस्य रुत्वे 'र्वो'रिति दीर्घे 'मधू'रिति रूपापत्तिः तदाश्रयणे मानाऽभावात् 'मधु'गितीति वैयर्थ्यश्चिन्त्य इत्याहुः । तुक्सन्नीति । एवं 'लक्ष्यलक्षणस्ये'ति न्यायेन पुनस्तुगप्रवृत्तेश्चिन्त्यमिदं वचनमिति भावः । पदविषयत्वात्संहितायास्तत्कार्यं तुक् पश्चादेवेत्यन्ये माध्यमाय वर्णयन्ति । शपूर्वा इति । तन्त्रत्वेन 'शपूर्वा' इति वार्तिकेनेति बोध्यम् । क्वचित्तु 'शर्पूर्वाः खयः' इत्येव पाठः । द्विर्वचने चेति । अनुस्वारस्यैव द्वित्वे द्वयोरनुस्वारयोः क्रमेण परसवर्णाविति भावः । अनुस्वारस्य शर्षु पाठेन यत्वेऽपि यन्त्वा

१ 'श्चुत्वं धुड्विधौ' पा० । २ 'पट्' पा० । ३ 'न्योऽसिद्ध.' पा० । ३ 'ढत्वे'ति क्वचित् ।

[तेनैष दोषः सिद्धः]। अथ हि प्रयोगो द्विर्वचनमसिद्धं स्यादाद्यादीनि निवर्त्तेरन्॥

## न लोपः प्रातिपदिकान्तस्य ।८।२।७।

नलोपेऽन्तग्रहणं किमर्थम् ? ॥ ॥ नलोपेऽन्तग्रहणं पदाधिकारस्य विशेषणत्वात् ॥ ॥ नलोपेऽन्तग्रहणं क्रियते ॥ किं कारणम् ?॥ 'पदाधिकारस्य विशेषणत्वात्'। पदाधिकारो विशेषणम् ॥ कथम् ? ॥ पदस्येति नैषा स्थानषष्ठी ॥ का तर्हि ?॥ विशेषणषष्ठी ॥ ॥*॥ अह्नो नलोपप्रतिषेधः*॥ अह्नो नलोपस्य[3] प्रतिषेधो वक्तव्यः । अहोभ्याम् । अहोभिरिति ॥ स तर्हि प्रतिषेधो वक्तव्यः ? ॥ न वक्तव्यः । रुरत्र बाधको भविष्यति ॥ असिद्धो रुस्तस्यासिद्धत्वान्नलोपः प्राप्नोति । अनवकाशो रुर्नलोपं बाधिष्यते ॥ सावकाशो रुः ॥ कोऽवकाशः ?॥ अनन्त्योऽकारः ॥ आचार्यप्रवृत्तिर्ज्ञापयति

---

प्र ]रत्वादीनि निवर्तेरन्निति । द्विर्वचनात्प्राक् प्रवर्तेरन् । कृते तु द्विर्वचनेऽनिष्टोऽपि तद्विकल्पः स्यात् । ततश्च गर्गो गरो गरो गल इत्याद्यपि प्रसज्येत ॥

न लोप प्राति । अन्तग्रहणमिति । 'न लोपः प्रातिपदिकस्ये'त्येवाऽस्तु पदस्येति वर्तते, तत्र नकारेण पदे विशेष्यमाणे तदन्तविधिना नकारान्तस्य पदस्य प्रातिपदिकस्य लोपो विधीयमानोऽलोऽन्त्यस्येत्यन्त्यस्य भविष्यतीति प्रश्नः।

नलोप इति । असत्यन्तग्रहणे प्रातिपदिकस्य पदस्य योऽवयवो नकारस्तस्य यत्र तत्र स्थितस्य लोपः स्यात् । ततश्च नराभ्यामित्यत्र स्यात् । अह्न इति । 'अहन्' 'रोऽसुपी'ति रुत्वरत्वयोः सत्युद्धौ सावकाशत्वात् 'पूर्वत्रासिद्ध'मित्यसिद्धत्वान्नलोपः प्राप्तो निषिध्यते। अनन्त्य इति । अकृतनलोपापेक्षयाऽनन्त्यः । कृते तु नलोपे एकदेशविकृतस्याऽनन्यत्वात्स एव अह शब्द इति प्रत्यभिज्ञाना

---

द ] तत्प्रवृत्तिस्त्वेकारादिति भावः । भाष्यकृत्तु 'उरक्मानयो'रिति सूत्रे नैपादिकेऽप्यरके तदप्रवृत्तिमेव वक्ष्यति कार्यकालेऽपि। ननु वानस्य निवृत्त्ययोगाद्विवर्तेरन्नित्यसङ्गतमत आह–न प्रवर्तेरन्निति । शास्त्रासिद्धत्वादिति भावः [स्वरितो वाऽनुदात्ते पदादौ] ॥

नलोप । नैत्यविभक्तिकं पृथक्पदं 'प्रातिपदिक'स्येति तथा । भाष्ये नैषा स्थानषष्ठीति । स्थानषष्ठ्येवेत्यर्थः । ननु रुत्वरत्वाभ्यां बाधात्कथं नलोपप्रसक्तिरत आह–अह्निति । नन्वलोऽन्त्यस्य विधीयमानं रुत्वं कथमनन्त्ये सावकाशं स्यादत आह–अकृतेति। न चाऽकारस्य रौ रे वा विशेषाऽभावनोभयविधानं व्यर्थं । सत्युद्विषये लोपाऽभावेन तयोश्चारितार्थ्यमिति भावः । ननु नलोपे कृतेऽचरितार्थ्यत् कथं इत्यत आह–

---

१ अत्र वार्त्तिकम् । २ 'द्विर्वचन'मिति क्वचित् । ३ 'नलोपप्रति' पा० ।

'नानन्त्यस्य रुर्भवती'ति यदयमहन्ग्रहणं करोति ॥ * ॥ अहन्ग्रहणादिति चेत्सम्बुद्ध्यर्थं वचनम् ॥ * ॥ अहन्ग्रहणादिति चेत्सम्बुद्ध्यर्थमेतत्स्यात् । हेऽह रिति ॥ यत्तर्हि रुत्वं शास्ति ॥ एतदपि सम्बुद्ध्यर्थमेव स्यात् । हे दीर्घाहोऽत्र । यत्तर्हि रूपरात्रिरथन्तरेषूपसङ्ख्यानं करोति तज्ज्ञापयत्याचार्यो 'नानन्त्य स्य रुर्भवती'ति ॥ कथं कृत्वा ज्ञापकः ? ॥ न ह्यस्ति विशेषो रूपरात्रि रथन्तरेष्वनन्त्यस्य रो वा रे वा ॥ [ नलोपः प्रातिपदिकान्तस्य ] ॥

## न ङिसम्बुद्ध्योः ।८।२।८।

प्र ] वलाऽनन्त्यस्येति वचनादकारस्य रुत्वप्रसङ्गः । यदयमहन्ग्रहणमिति, नकारा-ऽपरित्यागेन निर्देशस्यैतत्प्रयोजनम्—नकारान्तस्य स्थानित्वं यथा स्यात् । अन्य-था'ऽह' इति ब्रूयात् । सम्बुद्ध्यर्थमिति । सम्बुद्धौ नलोपस्य प्रतिषेधात्सदन्तानु करणनिर्देशः स्यादिति नलोपाऽभावो न ज्ञाप्येत । यत्तर्हि रुत्वमिति । हेऽह रित्यत्र 'रोऽसुपी'ति रादेशः क्रियते । 'अहन्नि'त्यनेन तु रुत्वं विधीयते । तेनाऽकृतनलोपनिर्देशो नलोपाऽभावस्य ज्ञापक एवेति भावः । हे दीर्घाहो ऽत्रेति । दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः । हल्ङ्यादिलोपः । प्रत्ययलक्षणेन सुप्परत्वाद्रुत्वम् । यत्तर्हीति—वार्तिककारवचनं ज्ञापकं नलोपाभावस्येति । नह्य स्तीति । अत्र परस्य रोरुत्वमुच्यते अकारस्य तु रो रेफे वा विशेषाभावाद्रादे शमेव विदध्यादिति रुत्वविधानान्नलोपाऽभावोऽनुमीयत इति नकारस्यैव रुत्व-रत्वाभ्यां रूपं भाव्यमिति सिद्धमिष्टम् ॥ [ नलोप प्र ] ।

उ ] नकारेति । लुप्तविभक्तिकत्वपूर्वं नकारावस्थानेन निर्देशादित्यर्थः । सम्बुद्धौ नलोप स्येति । एवञ्च नकारमहित्वनिर्देशस्याऽलुप्तनकारस्य सम्बुद्ध्यर्थत्वादहोऽन्त्यस्यानित्यादौ नलोपः स्या देव, रुत्वं च न स्यादित्यर्थः । हल्ङ्यादिलोप इति । निराकरणस्य पुंल्लिङ्गत्वादन्यपदार्थतया न लुक् । रादेशमेवेति । 'रोऽसुपी'ति सूत्रेणेत्यर्थः । एतज्ज्ञापकस्य भाष्याक्तत्वादन्यसम्बुद्धावेव प्रवृत्तिरिति 'भोऽहोऽत्र' ...मम्... स्यादौ चारितार्थ्यमिति न शङ्क्यम्, तस्मिन्विधानेऽपि वस्तुतस्त्वन ...कारो रनलोपः बाधिष्यते इत्येव सिद्धान्तः । न च सम्बुद्धावचरितार्थ, तत्रापि नलोपमात्रे । निषेधेनापि बाधितत्वं स्यात् । अत एव कर्तर्यन्यो दधि दीयते न रात्रौ तद्दायने, कौण्डिन्याय तु तक्रमित्यादावपि सर्वदा कौण्डिन्याय तक्रदानमेव भवति । अत एव पूर्वपक्षिणः स्वैव स्थाने सम्बुद्धौ चारितार्थ्यं नाशङ्कितम् । अन्यत्रैव ज्ञापकमात्र इति वार्तिकमतानुसारी शङ्कते—अनन्त्योऽवकाश इति । तन्नुम्यैकदेशी मन्यते— आचार्येत्यादीत्यलम् । [ न लोपः प्रातिपदिकान्तस्य ] ॥

१ 'अह' पा० ।

याज्यानुवाक्या भवन्ती'ति ॥ एवं तर्हि परिगणनं कर्त्तव्य ॥*॥ 'त्रिहर्यधिपत्यग्निरे'[1] ॥*॥ त्रि–त्रिवतीर्याज्यानुवाक्या भवन्ति । त्रि ॥ हरि–हरिवो मेदिनं त्वा । हरि ॥ अधिपति–अधिपतिवतीर्जुहोति । अधिपति ॥ अग्नि–चतुरग्निवानिव । अग्नि ॥ रे–आरेवानेतु नो विश इति ॥ यदि तर्हि परिगणनं क्रियते सरस्वतीवान् भारतीवान्[2] अपूपवान् दधिवांश्चरुरित्यत्र न प्राप्नोति ॥ एवं तर्हि [ ॥*॥ छन्दसीरो बहुलम् ॥*॥ ] ॥ छन्दसीरो बहुलमिति वक्तव्यम् ।

## अनो नुट् ८।२।१६।

यदि पुनरयं नुट् पूर्वान्तः क्रियेत–'अनो नु'[2]गिति ॥ * ॥ अनो नुकि विनामरुविधिप्रतिषेधः ॥ * ॥ अनो नुकि सति विनामो विधेयः । अक्षण्वान् 'पदान्तस्य[4] ने'ति निषेधः प्राप्नोति ॥ रुश्च प्रतिषेध्य –सुपथिन्तर । 'नश्छव्यप्रशा'निति रु. प्राप्नोति ॥ अस्तु तर्हि परादिः ॥*॥ परादौ वलप्रतिषेधोऽवग्रहश्च ॥ * ॥ यदि परादिर्वत्वस्य प्रतिषेधो वक्तव्यः । अक्षण्वानिति । 'मादुपधायाश्च मतोर्वोऽयवादिभ्य' इति वत्वं प्राप्नोति । अवग्रहश्चाऽनिष्टे देशे प्राप्नोति–अक्षण्[2]वानिति ॥ अस्तु तर्हि पूर्वान्तः ॥ ननु चोक्तम्–'अनो नुकि विनामरुविधिप्रतिषेध' इति ॥*॥ भत्वान्सिद्धम् ॥*॥ [ भत्वात्सिद्धमेतत्[3] ] भसंज्ञा वक्तव्या ॥ यदि तर्हि भसंज्ञा 'अल्लोपोऽन' इत्यल्लोपः प्राप्नोति ॥

प्र ] विशेषणमिति । एष्यदर्शनवशेन वाक्यशेषकल्पनात् । एवं तर्हीति । बहुलग्रहणाद्रैशब्दादपि विजन्ताद्वत्वं भवति । अथवा रयिशब्दस्य 'रयेर्मतौ बहुल'मिति कृतसंप्रसारणस्य रूपम्–आरेवानिति । [ छन्दसीरः ] ॥

अनो नुट् । यदीति । यदि पूर्वान्तलिङ्ग पठ्येतेत्यर्थः । अक्षण्वानिति । अक्षिशब्दस्य मतुपि छन्दस्यपि दृश्यत इत्यनङादेशः । नुकोऽसिद्धत्वात्पूर्वं नलोपो, भूतपूर्वगत्या नुक् । सुपथिन्तर इति । 'नाद्घस्ये'ति नुकि सति पदान्तत्वात्तकारस्य रुत्वप्रसङ्गः । परादाविति । नुटो मतुब्भक्तत्वात्तद्ग्रहणेन ग्रहणाद्वत्वप्रसङ्गः । भत्वादिति । अयस्मयादित्वात् । अल्लोप इति । एतच्चाऽलोपे

उ.] छन्दसीरः । विजन्तादिति । रि पि गताविति यस्मात्क्विपि गुणः । अत्रेरन्तत्वाभावेऽपि बहुलग्रहणाद्भवतीति भावः । अथवेति । अत्र पक्षे ईवर्णान्तादिति हिस्त्वाद्भवति । भाष्ये–अपूपवानिति वाक्यमन्दर्भेण पठितम् । [ छन्दसीर ] ॥

अनो नुट् । भाष्ये–यदीति । कृत्वा चिन्तेय । यदि पूर्वान्तस्तत्र को दोष इति प्रश्न ।

1 'रयग्निरेभ्य' पा० । २ अय पाठः क्वाचित्क. । ३ इदं हुम स्यात । ४ 'पदान्तस्ये'ति पा ०।

॥ * ॥ अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि ॥ * ॥ अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि वक्तव्यम् ॥

इह तर्हि सुपथिन्तर —नान्तस्य टिलोपः सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्… इति लोपः प्राप्नोति ॥

॥ * ॥ घग्रहणं च ॥ * ॥ घग्रहणं च कर्तव्यम् ॥

तत्तर्हि बहु वक्तव्यं, नुड्वक्तव्यो, भसंज्ञा च वक्तव्या, अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि कर्तव्यं, घग्रहणं च कर्तव्यमिति ॥ न कर्तव्यम्—यत्तावदुच्यते 'नुड्वक्तव्य' इति, नुक एष परिहारो 'भत्वादसिद्ध'मिति ॥ [यदप्युच्यते] 'भसंज्ञा वक्तव्ये'ति । क्रियते न्यास एव—'अयस्मयादीनिच्छन्दसी'ति ॥ यदप्युच्यते 'अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि घग्रहणं च कर्तव्य'मिति, न कर्तव्यम् । उभयसंज्ञान्यपि हि छन्दांसि दृश्यन्ते । तद्यथा—स सुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वं, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वादल्लोपटिलोपौ न, भत्वाद्विनामरत्विधिप्रतिषेधौ भविष्यतः ॥ सिध्यति—सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्त—'परादौ वत्वप्रतिषेधोऽसप्रहश्चे'ति ॥ यत्तावदुच्यते वत्वप्रतिषेध' इति । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति । यस्य हि निर्दिश्यते तस्य न प्राप्नोति ॥ किं कारणम् ? ॥

प्र ] नुकोऽसिद्धत्वमनाश्रित्योच्यते । नुकोऽसिद्धत्वाद्यनन्तत्वाभावो, नलोपस्त्वन्लोपे सिद्धो 'नलोपः सुप्स्वरे'ति नियमात् । नाऽपि नलोपाऽपवादत्वान्नुको नाऽनन्तत्वमिति शक्यते वक्तुम्, अक्षण्वानिति पूर्वस्य नकारस्याऽपदान्तत्वाण्णत्वे कृते परस्य ष्टुत्वेन सिद्धत्वाद्विनामविधानस्याऽयुक्तत्वप्रसङ्गात् । घग्रहणं चेति । घे नान्तस्य टिलोपप्रसङ्गे प्रकृतिभावो विधेय । नुक एष इति । आश्रित्य नुक

उ ] तस्य पदान्तत्वं दर्शयितुमाह—अक्षिशब्दस्येति । भूतपूर्वगत्येति । सर्वत्र नलोपप्रसङ्गेन सावकाशाऽभावादिति भाव । भत्वप्रसङ्ग इति । आदे परस्येति तस्य बाधप्रसङ्ग इति भाव । असिद्धत्वमिति । 'पूर्वत्राऽसिद्ध'मित्यनेन । ननु नलोपस्याऽसिद्धत्वादनन्तत्वमित्यन्लोपोऽस्त इति दुर्वारमत आह—नलोपस्त्विति । 'नलोपापवादत्वान्नुको नानन्तत्व'मिति पाठ । विनामविधानस्येति । तस्मान्नलोपे कृते नुगिति वार्तिककारस्याशयं नम्, असम्भवे एव तस्य नलोपापवादत्वादस्य नलोपत्वस्याऽसिद्धत्वाच्चेति भाव । सुपथिन्तर इत्यत्र 'नाद्घस्ये'त्युत्तरसूत्रेण नुट । प्रकृतिभाव इति । घसंज्ञकप्रत्यये परत इत्यर्थ । आश्रित्य नुकमिति । नुटो वक्तव्यत्वं न वार्तिककृतो दोष, नुकमभ्युपगम्यैव 'भत्वा

१ 'वक्तव्यम्' पा० । २ इदं क्वचित्र । ३ 'तर्हि' पा० । ४ 'नाऽनन्तत्व' पा० ।

नुटा व्यवहितत्वात् ॥ असिद्धो नुट्, तस्याऽसिद्धत्वान्नविर्यति ॥
अवग्रहेऽपि, न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ॥ [ अनो नुट् ] ॥

नाडस्य ।८।२।१७

॥ * ॥ ईद्रथिनः ॥ * ॥ रथिन ईत्वक्तव्य. । रथीतर. ॥ * ॥ भूरिदाव्नस्तुट् ॥ * ॥ भूरिदाव्नस्तुड् वक्तव्य. । भूरिदावत्तरो जन. ॥ [नाद्धस्य] ॥

कृपो रो लः ।८।२।१८

॥ * ॥ कृपणादीनां प्रतिषेधः ॥ * ॥ कृपणादीनां प्रतिषेधो वक्तव्य. । कृपण । कृपाण । कृपीट । कृपीटम् ॥ * ॥ बालमूललघ्वलमङ्गुलीनां वा

---

प्र ] 'भत्वात्सिद्ध'मिति परिहाराभिधानाद्वक्तव्य इति चोदनमयुक्तमित्यर्थः । असिद्धो नुडिति । अनोऽपि नुटो वत्वाऽभाव । न लक्षणेनेति । पौरुषेयत्वाद वग्रहकरणस्य यथालक्षण पदानि कर्तव्यानीत्यर्थ. । [ अनो नुट् ] ॥

नाडस्य । ईद्रथिन इति । नुडपवाद ईकारो विधीयते स च नलोपे कृते ईकारस्य विधेय । यदि तु नलोपाऽपवादो नकारस्य स्थाने विधीयेत तदा तस्याऽसिद्धत्वादेकादेशाभावाद्रूप न सिध्येत् । भूरिदावत्तर इति । भूरि ददातीति वनिप् । [ नाडस्य ] ॥

कृपो । कृपण इति । 'रञ्जे. क्युं'मिति बाहुलकात् क्युन् । कृपाण इति । 'युचिनुचिहस' क्विचे'ति बाहुलकादानच । कृपीटमिति । 'कृतृपिभ्यां कीट'-मिति कीटन् । 'कृपे'रेतत्तु 'कृपे सम्प्रसारण चे'ति भिदादिषु पाठाद्भवति । ततो लाक्षणिकत्वाल्लत्वाऽभाव । अथ कृपू सामर्थ्य इत्येव कस्मान्न पठ्यते, लत्व हि न विधेय भवति । नैतदस्ति । अचीक्लृपदिति हि न सिध्येत् । 'ऋकारलृकारयो सवर्णविधि'रिति लकारस्य ऋकारे कृतेऽचीकृपदिति स्यात् । यदा तु लत्व

---

व ] मिद' मिति परिहाराभिधानादिति भाषार्थ इति भाव । [ अनो नुट् ] ॥

नाडस्य । नुडपवाद इति । रथशब्दान्मत्वर्थीयान्तादपि नुटि प्राप्ते तदपवाद ईकार इत्यर्थ । यदि त्विति । नलोपस्याऽस्याऽसिद्धत्वान्नलोपेऽस्य चारितार्थ्याच्च नाऽपवादत्व भाष्यमतेऽपीति भाव । [ नाडस्य ] ॥

कृपो रो ल. । ततो लाक्षणिकत्वादिति । एवं च वचन विनाऽपि रूप सिद्धम इति भाव । एतद्वचन भिदादिष्वसामाणिकमिति भाष्याशय । ऋकारे इति । 'उरण्रप'

---

१ इद प्रायो नास्ति । २ 'रञ्जे' पा. ।

लो र(त्व)मापद्यते ॥ ॥ वालमूललघ्वलमङ्गुलीनां वा लो र(त्व)मापद्यत इति वक्तव्यम् । वाल[1]–अश्ववार । अश्ववाल[2] । वाल ॥ मूल–मूरदेव । मूलदेव[2] । मूल ॥ लघु–वरणस्य[3] लघुस्यद । वरणस्य रघुस्यद । लघु ॥ अलम्–अर भार्य[4] । अर मर्याय[4] । अलम् ॥ अङ्गुलि–सुवाहु स्वङ्गुलि । सुबाहु स्वङ्गुरि ॥ ॥ सञ्ज्ञाच्छन्दसोर्वा कपिलकादीनाम् ॥ * ॥ सञ्ज्ञाच्छन्दसोर्वा कपिलकादीनामिति वक्तव्यम् । कपिरक । कपिलक[5] । तिलिपिलिकम् । तिपिरिकम् । कलमपम् । कर्मपम् । रोमाणि । लोमानि । पांसुलम् । पांसुरम् । कर्म । कल्म । शुक्र । शुक्ल ॥

## उपसर्गस्यायतौ ।१।८।१९।

किमिदमयतिग्रहणं रेफविशेषणम्–'अयतिपरस्य रेफस्य लो भवति स चेदुपसर्गस्य भवती'ति,–आहोस्विदुपसर्गविशेषणम्–'अयतिपरस्योपसर्गस्य यो रेफस्तस्य लो भवती'ति ॥ कश्चात्र विशेषः ? ॥ * ॥ रेफस्याऽयता

प्र] क्रियते तदा पूर्वत्राऽसिद्धमिति लत्वस्याऽसिद्धत्वात् पूर्वमृकारस्ततो लत्वमिति दोषाभाव । तथा चलीक्लृप्यत इति रीकोऽपि लत्वमिति दोषाऽभाव । तथा चलाक्लृप्यत इति रारोऽपि लत्वसिद्धि । वालेति । 'वल संवरणे' । वल्यत इति वाल । 'मूल प्रतिष्ठाया'मित्यस्मादिगुपधलक्षण क । 'लघि वद्योर्नलोपश्चे'ति कुप्रत्यये लघुशब्द । अङ्गेर्ङ्कतन्यञ्जीत्युलि प्रत्ययेऽङ्गुलिशब्द । 'अमर्गुरिश्च लोवे'ति नापेक्षितम् । कपिलकादिषु वा रस्य ल । रोमाणीति । र शब्द इत्यस्मान्मनिनि रोमन् । लामस्विति निपातनमनाश्रित्योदाहरणोपन्यास । पांसुरस्मिन्नस्तिति नगपांसुपाण्डुभ्यश्चे'ति र । कर्मेति । कृञो मनिन । शुक्रे शुक्ल इति । 'ऋज्रेन्द्राग्रे'ति निपातनादयुक्त पाठ । [कृपो रो ल] ।

उपसर्ग । किमिदमिति । 'र' इति वर्तते । तत्र किं प्राधान्याद्रेफस्यायति

उ] नेन । वा रस्य ल इति । पूर्वसूत्रेण लस्य रत्व बोधकम् अनेन रस्य लो वत्यर्थ । कपिलकादि[?]ति विषयसप्तमी । वार्तिकेऽपि सिद्धये रस्य लो वेति शेषा द्रष्टव्य ।

निपातनमनाश्रित्येति । तत्र रोमन्लोमनिति द्वयो पाठादित्यर्थ । ऋज्रेन्द्राग्रेति । तत्र हि शुक्रशुक्लौ द्वावपि पठितौ । अयुक्त इति । वस्तुत उणादिसूत्र एवाऽयुक्त पाठ इति बोध्यम् । लोत्यपाणिनीयमेति बोध्यम् । [कृपो रो ल] ॥

१ वद लुनन् । २ उदाहरणमत्र पौर्वापर्यं दृश्यतेऽबहुत्र । ३ हरिणस्य लघुस्यद हरिणस्य रघुस्यद 'शुद्ध पाठ । ४ 'अझाय' इति पाठ । ५ शुद्ध शुक्र पा० । ६ लत्वसिद्धि पा० ।

विति चेत्परेरपसङ्ख्यानम् ॥ * ॥ रेफस्याऽयताविति चेत्परेरपसङ्ख्यानं कर्तव्यम् । पल्ययते ॥ वचनाद्भविष्यति ॥ अस्ति वचने प्रयोजनम् ॥ किम्[1] ? ॥ प्लायते । पलायते ॥ अस्तु तर्हि उपसर्गविशेषणम् ॥ * ॥ उपसर्गस्येति चेदेकादेशेऽप्रसिद्धि ॥ * ॥ उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिर्भवति । प्लायते पलायते । एकादेशे कृते व्यपवर्गाभावादयतावि[2]ति लत्वं न प्राप्नोति ॥ अन्तादिवद्भावेन व्यपवर्गः ॥ उभयत आश्रये नान्तादिवत् ॥ एवं तर्ह्येकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिवत्'इति ॥ दोषाः खल्वपि तस्याः परिभाषायाः—'तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्विति ॥ अथवा पुनरस्तु रेफविशेषणम् ॥ ननु चोक्तम्—'रेफस्यायताविति चेत्परेरुपसङ्ख्यान'मिति ॥ वचनाद्भविष्यति ॥ ननु चोक्तम्—'अस्ति वचने प्रयोजनं किं, प्लायते पलायत'इति ॥ अत्राप्यकारेण व्यवहितत्वान्न प्राप्नोति ॥ एकादेशे कृते नास्ति व्यवधानम् ॥ एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावः—'पूर्वत्रासिद्धे न स्थानिवत्'इति ॥ दोषाः खल्वपि तस्याः परिभाषायास्तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति ॥

स ]विशेषणमुत श्रुतत्वोपसर्गस्येति प्रश्नः । पल्ययत इति । यकारेण व्यवधानात्प्राप्तिः । वचनादिति । सर्वत्र व्यवधानसद्भावेन नाव्यवधानमिति स्यात् । न च निर्दुरयतावपरास्तु इति वक्तुं शक्यम्, एवं हि निर्दुरोरयताविति वक्तव्यं स्यात् । प्लायत इति । एकादेशस्य परं प्रत्यादिवत्त्वादयतिग्रहणेन ग्रहणाद्व्यवधानाऽभावं मन्यते । अस्त्विति । प्रतेरयतिपरस्य प्रयोगो नास्ति, इण एव तेन योग इत्याह । दोषा इति । ततोऽस्ति स्थानिवद्भावः इत्युभयथाऽप्यदोषः ।

उपसर्गस्य । सन्देहे बीजमाह—तत्र किमिति । क्वचिन्वित प्राधान्यम् । सर्वत्रेति । 'प्लायते इत्यादावप्येकादेशस्य स्थानिवत्त्वेन व्यवधानसद्भावादिति भावः । वस्तुतः स्यादिति । प्रत्यासत्त्याऽयं नयाऽन्वयिनापि निर्दुरोर्ग्रहणेन निरायवशास्त्रार्थे प्रत्यर्थविद्याय वचनात्सिद्धम् इति केचित् । तन्त्वतपक्षे प्रतेरपि स्यात्, एतन्तु सङ्ग्रहेण व्यवधानाल्लभविष्यतीत्यत आह—प्रतेरिति । 'प्रत्यय'इत्यादिप्रयोगस्तर्हि कथमत आह—इण एवेति । उभयथापीति । उपसर्गविशेषणत्वेन स्थानिवद्भावव्यपवर्गे प्लायत इत्यादौ लत्वसिद्धिः । रेफविशेषणत्वे स्थानिवत्त्वेन सर्वत्र व्यवधानसत्त्वेन नाऽव्यवधानमिति स्यादनेन सिद्धिरित्यर्थः [ उपसर्गस्यायतौ ] ॥

१ इदं क्वचित् । २ 'अयताविति'इति क्वचिन्नास्ति ।

## अचि विभाषा ।८।२।२१।

॥ * ॥ णत्वोपसंख्यानम् ॥ * ॥ णत्वोपसंख्यानं कर्तव्यम् ॥ * ॥ इहापि यथा स्यात् निगार्यते निगाल्यते ॥ किं पुनः कारणं न सिध्यति ? ॥ अचीत्युच्यते न चात्राजादिं पश्यामः ॥ प्रत्ययलक्षणेन ॥ 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' ॥ एवं तर्हि स्थानिवद्भावाद्भविष्यति ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति ॥ अत उत्तरं पठति ॥ * ॥ गिरतेर्लत्वे णत्वोक्तम् ॥ * ॥ [ गिरतेर्लत्वे णत्वमुक्तम्[2] ] ॥ किमुक्तम् ? ॥ 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति ॥ [ अचि विभाषा ] ।

## परेश्च घाङ्कयोः ।८।२।२२।

॥ * ॥ योगे च ॥ * ॥ योगे चेति वक्तव्यम् । इहापि यथा स्यात्-परियोगः पलियोगः । ॥ * ॥ सङि रुत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि ॥ ॥ 'सङी'ति प्रकृत्य रुत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानि ॥ किं प्रयोजनम् ? ॥ * ॥ प्रयोजनं-गिरौ गिरः पयो धावति द्विष्टरा दृषत्स्थानं काष्ठशक्स्थाता कुञ्चा ध्रुवं [इति] ॥ * ॥ [ प्रयोजनं गिरौ गिरः पयो धावति द्विष्टरा दृषत्स्थानं काष्ठशक्स्थाता कुञ्चा ध्रुवं इति ] ॥ गिरौ गिरः इत्यत्र

---

प्र.] अचि वि । णत्वेति । पदस्य लत्वविधानात्तस्यान्तरङ्गत्वाऽभावात्पूर्वत्रासिद्धमित्यसिद्धत्वाण्णिलोपे कृते लत्वाऽप्रसङ्गः । वर्णाश्रय इति । विशेष्यस्य प्रत्ययस्याऽसंनिधानाद्वर्णाश्रयं लत्वं न तु प्रत्ययाश्रयमिति भावः ॥ [अचि विभाषा]

परेश्च । सङीति । सनः सकारादारभ्य आ महिङो ङकारेण प्रत्याहारः । गिराविति । गिरतेः क्विबन्तात्सप्तमी । वक्ष्यत्येतदिति । इह विरुध्यते 'वक्ष्यन्ते

---

उ.] अचि वि । ननु गिलात्राऽपेक्षत्वेनाऽन्तरङ्गत्वात्पूर्वं लत्वे पश्चाण्णिलोपे रूपसिद्धेः किंणत्वोपसंख्यानेनेत्यत आह—पदस्येति । नन्वेवमपि परत्वात्तत्र स्यादत आह—पूर्वत्रेति । नन्वस्याजादौ प्रत्यये विधानेन वर्णप्राधान्याऽभावात्कथं स निषेधोऽत आह-विशेष्यस्येति । यद्यपि 'धातोः स्वरूपग्रहणे' इति परिभाषया संनिहितप्रत्ययस्य विशेष्यतया तदादिविधिसुलभत्वेन प्रत्ययलक्षणेनायं सिध्यति तथापि तस्याऽविहितकार्यनियामकत्वेन न विधेयकवाक्यनेत्याशयः । [ अचि विभाषा ] ॥

परेश्च । सन इति । तेन धातुविहितसर्वप्रत्ययसङ्ग्रह । भाष्ये-वक्ष्यत्येतदिति ।

---

१ इह प्रायो लुप्तम् । २ इह लुप्तम् ।

'अचि विभाषे'ति लत्वं प्राप्नोति—'सर्डा'ति वचनान्न भवति॥ नैतदस्ति प्रयोजनम्। उक्तमेतत्—'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्ध'मिति॥

पयो धावतीत्यत्र 'धि चे'ति सलोपः प्राप्नोति—'सर्डा'ति वचनान्न भवति॥ एतदपि नास्ति प्रयोजनं वक्ष्यत्येतत्—'धिसकारे सिचो लोप' इति॥

द्विष्टरामित्यत्र 'ह्रस्वादङ्गा'दिति सलोपः प्राप्नोति 'सर्डा'ति वचनान्न भवति॥ एतदपि नास्ति प्रयोजनम्—अत्रापि सिच इत्येवाऽनुवर्तिष्यते॥

उपरस्थानमित्यत्र 'झलो झली'ति सलोपः प्राप्नोति 'सर्डा'ति वचनान्न भवति॥ एतदपि नास्ति प्रयोजनम्—अत्रापि 'सिच' इत्येवानुवर्तिष्यते॥

काष्ठशक्स्थातेत्यत्र 'स्कोः संयोगाद्योरन्ते चे'ति ककारलोपः प्राप्नोति 'सर्डा'ति वचनान्न भवति॥

एतदपि नास्ति प्रयोजनम्—काष्ठशगेव नास्ति कुतो य काष्ठशक्स्थितेति?॥

---

प्र ] तच्चकाधीत्येव भवितव्य'मिति। तस्मादिदं वक्तव्यम्—एकपदाश्रयत्वादन्तरङ्गत्वे कर्तव्ये पदद्वयनिमित्तत्वाद्बहिरङ्गस्य सलोपस्याऽसिद्धत्वात्पूर्वेणेति निर्दिष्टविषयाऽभावाद्गुत्वमेवाऽसिद्धत्वाऽभावात्प्रवर्तते। अल्विधित्वाच्च स्थानिवत्त्वाऽभावाद्रोलोपाऽभावः। द्विष्टरामिति। द्वौ धारौ द्विः। सुच्प्रत्ययः। परिपूर्णत्वाद्वारद्वयस्य प्रकर्षप्रत्ययः। तदन्तात् किमेत्तिङव्ययेत्याम्प्रत्ययः। उपरस्थानमिति। 'उदः स्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णविधानात्सिचोऽन्यस्य सकारस्य 'झलो झली'ति लोपो न भवतीति ज्ञापकमाहुः। अन्यथा सलोपेनैवोत्थानमित्यादेः सिद्धत्वात्पूर्वसवर्णविधानमनर्थकं स्यात्। काष्ठशगेवेति। दृशिग्रहणात्प्रयोगानुसरणात्ककारान्तेभ्यो धातुभ्यः क्विबभावात्। पक्स्थातेत्यत्र तु पचे कुत्वस्याऽसिद्ध

---

उ ] सूत्रेऽवृद्धिरित्यत्र ('धिसकारे सिचो लोप' इत्यस्य पूर्वपक्षस्थत्वादिदं समाधानमुपलक्षणमित्याहुः) इदं विरुध्यत इति। भाष्ये तु वार्तिकरीत्या वार्तिकप्रत्याख्यानम्। भाष्यमते तत्समाधिमाह—अल्विधित्वादिति। वस्तुतस्तु लोपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषया कार्यकालपक्षेऽप्यप्रवृत्तेः खरवसानयोरिति सूत्रभाष्ये वक्ष्यमाणत्वेदमपि चिन्त्यम्। सिचोऽन्यस्यैति। धिचे स्विदं तु सामान्यापेक्षं ज्ञापकम्। तेन 'द्विष्टरा'मित्यादौ 'ह्रस्वादङ्गा'दिति सलोपो न। भाष्ये त्वनुवृत्तिलभ्यमात्सिच इत्येवानुवर्तिष्यत इत्युक्तम्। ज्ञापकमुपपादयति—अन्यथेति। वस्तुत इदं ज्ञापकं 'झलो झली'ति प्रकरणस्थसलोपस्तिटप्रत्यय एवेति वर्णनीयम्। तेन यथा धात्विति 'द्विष्टरा'मित्यत्रापि न दोष इति ध्येयम्। ननु ... आह—दृशिग्रहणादिति। 'क्विप्चे'त्यत्र पूर्वसूत्राद्दृशिग्रहणमनुवर्तत इति भावः। 'क्विप्

---

१ 'सुचो लोप' पा०। २ 'स्थाने त्यादे' पा०। ३ 'वर्ये' पा०।

अथ वा बहिरङ्गो यणादेशोऽन्तरङ्गो लोपः । 'असिद्धं बहिरङ्गमन्तरङ्गे' ।
॥ * ॥ संयोगान्तलोपे सग्रहणम् ॥ * ॥ संयोगान्तलोपे सग्रहणं कर्तव्यम् । 'संयोगान्तलोपः सस्य चे'ति वक्तव्यम् । इहापि यथा स्यात्—श्रेयान् भूयान् ज्यायान् ॥ किं पुनः कारणं न सिध्यति ? ॥ परत्वाद्रुत्वं प्राप्नोति ॥ असिद्धो रुत्वस्याऽसिद्धत्वाल्लोपो भविष्यति ॥ न सिध्यति ॥ किं कारणं ? ॥ ॥*॥ रुविधानस्याऽनवकाशत्वात् ॥*॥ अनवकाशो रुर्लोपं बाधेत ॥ सावकाशो रुः ॥ कोऽवकाशः ? ॥ पयः दिवः ॥ ननु चात्रापि जश्त्वं प्राप्नोति, स यथैव रुर्जश्त्वं बाधते एवं लोपमपि बाधेत ॥ न बाधते ॥ किं कारणम् ? ॥ येन नाऽप्राप्ते तस्य बाधनं भवति न चाऽप्राप्ते जश्त्वे रुरारभ्यते, लोपे पुनः प्राप्ते चाप्राप्ते च ॥*॥ [ अथवा ] योगविभागात् सिद्धम् ॥*॥ अथवा योगविभागः करिष्यते । एवं वक्ष्यामि—'संयोगान्तस्य लोपोऽरात्' । संयोगान्तस्य लोपो भवत्यरात् ॥ ततः 'सस्य' । सस्य च लोपो भवति संयोगान्तस्य ॥ किमर्थं पुनरिदमुच्यते ? ॥ 'प्रतिषिद्धार्थं रुबाधनार्थं च' ॥

प्र ] स्यत सिद्धावस्लोरिति न्यायेन स्थग्रहणमिहाऽनुवर्तते । तत्पञ्चम्या विपरिणम्यत इति यणो लोपाऽभावः । 'स्कोः संयोगाद्यो'रित्यत्र तु पञ्चम्यन्तमेव सम्बध्यते, तेन झल्पूर्वयोः स्कोर्लोपविधानाद्यण्पूर्वयोर्लोपाऽभावः । अन्तरङ्ग इति । एकपदाश्रयत्वात् । स यथैवेति । यदा लक्षणनिरपेक्षं कार्याणां बाध्यबाधकत्वमिति दर्शनं तदा विध्यन्तरैरनाक्रान्तो विषयो नास्तीत्यविशेषात्सर्वं कार्यं बाध्यमिति भावः । येन नाप्राप्त इति । यदा 'लक्षणं बाध्यते' इति दर्शनं तदा येन नाप्रा

उ ] हल्ग्रहणस्याऽनुवर्तमानस्य हलो लोपोऽत आह—हलोऽन्त्यलोपोऽस्तीति विपरिणम्यत इति । तच्च वाक्यभेदेन सम्बध्यते, तेनाऽहल्योऽपि कस्यचिल्लोपः स्यादिति । तेन झल इति पूर्वयोरिति । वस्तुतस्तु हल्ग्रहणस्य संयोगान्तलोपसूत्र एव सम्बन्धो न तु 'स्को'रित्यत्र 'झलो लोपः संयोगान्तलोपः' इति भाष्यस्वरसादित्याहुः । एकपदाश्रयत्वादिति । यद्यपि यण्विधौ न पदद्वयमपेक्षितं तथापि एतद्दृष्टे पदद्वयाश्रयो यणिति भावः । अत्र बहिरङ्गत्वस्य यत्वादिति वार्तिकस्यारम्भात्, 'बहिरङ्गो यणादेश' इति भाष्यस्य यणादेशाव्यवहितसंयोगान्तलोपप्राप्तिविषयकत्वघटितप्रयोगाऽनभिधानं बोध्यम् । अन्यथाऽन्तरङ्गलक्षणत्वादन्तरङ्गो लोप इत्येव वदेत् । एवं च 'बाध्य'ग्रहण इत्यादि चिन्त्यमेवेति दिक् । बाध्यसामान्यचिन्तायामुपयोगिनमाह यदेति । विशेषचिन्तायामाह-यदेति । प्रतिषिद्धलोपे यत्तत्र प्रयोजनं

१ 'च' इत्य ह० पा० । २ अयं पाठो न प्रामाणिकेषु दृश्यते । ३ 'गाद्वा सिद्धमिति' तु गौडाः ।

अथ वा यदेतद्रात्सस्येति सग्रहणं तत्पुरस्तादपकृष्यते—'संयोगान्तस्य लोप.' । ततः 'सस्य' । सस्य च संयोगान्तस्य लोपो भवति । ततः— 'रात् ।' रात्सस्यैव संयोगान्तस्य लोपो भवतीति[2] । अथ वा रात्सस्येत्यत्र 'संयोगान्तस्य लोप' इत्येतदनुवर्तिष्यते ॥ [ संयोगान्तस्य लोप ] ।

## धि च ८।२।२५

॥*॥ धिसकारे[3] सिचो लोप ॥–॥ धिसकारे सिचो लोपो वक्तव्यः ॥ किं प्रयोजनम् ? ॥ ॥ ॥ चकाद्धीति प्रयोजनम् ॥*॥ इह मा भूत् सलोप.— 'चकाद्धि पलितं शिर' इति ॥ यदि तर्हि सिचो लोप इत्युच्यते ॥*॥ आशाध्वं तु कथन्ते स्यात् ॥*॥ ['आशाध्व' तु कथम् ?] ॥ आशाध्व-मित्यत्र लोपो न प्राप्नोति ॥–॥ जश्त्वं सस्य भविष्यति ॥*॥ जश्त्वमत्र सकारस्य भविष्यति ॥*॥ सर्वत्रैव प्रसिद्धं स्यात् ॥*॥ सर्वत्रैव जश्त्वेन सिद्धं स्यात् । इहापि आयन्ध्वमारब्ध्वमिति, जश्त्वेनैव सिद्धम् ॥*॥ श्रुतिश्चापि न भिद्यते ॥ ॥ श्रुतिकृतश्चापि न कश्चिद्भेदो भवति ॥ –॥ लुङ्श्चापि न मूर्द्धन्ये

प्र.] विषय आक्रान्तस्तदेव बाध्यते । न हि तदबाधित्वा रुत्वं विषय लभते । यस्य तु क्वचित्प्राप्तिस्तदबाधेनाऽपि विषयलाभाच तद्बाध्यते । अरादिति । रात्परस्य संयोगान्तस्य लोपो न भवति । ऊर्क् । अमार्ट् । प्रतिषिद्धार्थं चेति । 'अरा'-दिति प्रतिषेधस्य बाधनार्थम् । यथा—मातु पितुरिति । 'श्रेया'नित्यादौ तु रुत्वबाधनार्थम् । नन्वानन्तर्यात्प्रतिषेधस्यैव बाधनार्थं सस्येत्येतत्स्यान्न तु रुत्वस्येत्याशङ्क्याह—अपवेति । अथ वा रात्सस्येत्यत्रेति । वाक्यभेदेन संबन्ध. । 'रात्सस्यैव लोपो भवती'त्येक वाक्यम् । 'संयोगान्तस्य लोप'इति द्वितीयम् ॥

धि च । धिसकार इति । स्थानिनो लोपं प्रति विषयत्वविवक्षया सकार इति सप्तमीनिर्देश । चकाद्धीति । हे शिरः ' पलितं सच्चकाद्धि शोभस्वेत्यर्थ । जश्त्वमिति । 'झला जश्झशी'त्यनेन । श्रुतिश्चापीति । एकस्याऽनेकस्य वा व्यञ्जनपरस्य श्रुतौ विशेषो नावधार्यते । लुङ्श्चापीति । श्लोकवार्तिककारस्याऽ-

उ.] यस्येयर्थं इत्याह—अरादिति । [ संयोगान्तस्य लोपः ] ॥

धि च । स्थानिन इति । धकारे परतो य सकारविषयो लोप स भिच एवेति भाष्यार्थ इति भाव: । हे शिर इति । अनेनाशु प्रार्थ्यते । भाष्ये आयंध्वमरब्ध्वमिति सानुस्वार. पाठ । भाष्ये—जश्त्वेनैव सिद्धमिति । एव च धि चेति सूत्र न कार्यमिति भाव· । ननु जश्त्वे दकारधकारौ लोपे तु ध एवेति कथ श्रुतिभेदो न स्यादत आह—एकस्येति ।

१ 'इष्यते' पा० । २ इतिः क्वचिन्न ३ श्लोकवार्त्तिकम् ।

ग्रहणम् ॥ॐ॥ तत्रायमप्यर्थः—इण पीध्वंलुङ्लिटां धोऽङ्गादित्यत्र इङ्ग्रहण न कर्तव्य भवति ॥ इहापि अच्योड्ढ्वमप्लोड्ढ्वमिति षचे सिचो घस्य ढुत्वे च कृते जश्त्वेन सिद्धम् ॥ॐ॥ सेटि दुष्यति ॥ॐ॥ सेटि दोषो भवति । इदमेव रूप स्यात्—अलविड्ढ्वम्,—इद न स्यात्—अलविध्वमिति । तस्मात्सिचो ग्रहण कर्तव्यम् ॥ यदि तर्हि सिचो ग्रहणं क्रियते– ॥ ॐ ॥ घसिभसोर्न सिध्येत्तु ॥ ॐ ॥ घसिभसोर्न सिध्यति–'सग्धिश्च मे सपीतिश्च मे' 'बब्धा ते हरी धाना' इत्यत्र न प्राप्नोति ॥ॐ॥ तस्मात्सिज्ग्रहण न तत् ॥ॐ॥ तस्माद्धि चेत्यत्र सिचो ग्रहणं न कर्तव्यम्॥ कथ 'चकाद्धि पलिस शिर' इति ? ॥ एव तर्हि सिग्ग्रहण कर्तव्यम् ॥ कथ सग्धिश्च मे सपीतिश्च मे बब्धा ते हरीधाना इति ? ॥ नैष दोषः । इह तावत् सग्धिरिति, नैतद्घसेरूप ॥ किं तर्हि ? ॥ सघेरेतद्रूपम् ॥ 'बब्धा ते हरीधाना' इति, नैतद्भसेरूप ॥ किं तर्हि ? ॥ बन्धेरेतद्रूपम् ॥ॐ॥ छान्दसो वर्णलोपो

प्र ] युक्तमिद वचनम् । अट्टुमप्टुमित्यादौ 'ह्रस्वादङ्गादिति' सिज्लोपे सति मूर्धन्यस्याऽविधाने रूप न सिध्येत् । सग्धिरिति । अदे 'चिनि बहुल छन्दसी'ति घस्लादेश । 'घसिभसोर्हलि च' इत्युपधालोप , तत्र 'झलो झली'ति सलोपो न न प्राप्नोति इष्यते च । बब्धामिति । भसेर्लोटि तामि श्लौ द्विर्वचने पूर्ववदुपधालोप । सघेरिति । सघ हिंसायामित्यस्य स्वरभेदोऽपि नास्ति, क्तिन्याद्युदात्तत्वा॰ त्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरविधानाच्च । अनेकार्थत्वाच्च धातूना समानादने सघिर्वर्तत इत्यर्थभेदोऽपि नास्ति । बन्धेरिति । 'बन्ध बन्धने' इत्यस्य भसेरर्थे वर्तमानस्य लोटि तामि व्यत्ययेन शपो श्लौ नलोपे वर्णव्यत्ययेन बकारस्य बकारे बब्धामिति भवति । क्वचिद्बधेरिति पाठ , तन्त्वयुक्त बधे सन्विषय

उ ] अनेकस्येति । एकस्थानकानेकस्येत्यर्थ । व्यञ्जनपरस्येति । षष्ठीत पुरुषबहुव्रीह्योरतन्त्रेण निर्देश । अट्टुमिति । एतदर्थं मूर्धन्ये इड्ग्रहणस्यावश्यकत्व, पूर्वपक्षवादी तु भगवता सूक्ष्मेक्षिका न कृतेति भाव । तादृशानामनभिधानमिति रहस्य कश्चित् । भाष्ये अच्योड्ढ्वमिति च्युङ्प्लुङो रूपे । इद न स्यादलविध्वमिति । विभाषेट इत्यस्याऽप्राप्ते , विधेयस्याऽभावाच्च । तस्मादिड्ग्रहण विधेति च कार्यमिति भाव । तत्पुरुषे इति । समाना निघिरिति समासेऽप्याद्युदात्तत्वमेव यथं । ननु सघेर्हिंसार्थत्वात्समानादनरूपार्थोऽप्राप्तोऽत आह–अनेकार्थत्वाच्चेति । सन्विषय इति । ममाविधयनेन

१ इद क्वचिन्न । २ क्रोडस्थानि क्वचिन्न ।

वा यथेष्कर्तारमध्वरे' ॥ * ॥ अथ वा छान्दसो वर्णलोपो भविष्यति । 'यथे ष्कर्तारमध्वरे' । तद्यथा[2]-'तुभ्येदमग्ने' ॥ तुभ्यमिदमग्न इति प्राप्ते । 'आम्बानां चरु' । नाम्बानां चरुरिति प्राप्ते । 'आव्याधिनी रुगणा' । आव्याधिनी सुगणा इति प्राप्ते । 'इष्कर्तारमध्वरस्य' । निष्कर्तारमिति प्राप्ते । 'शिवा उद्रस्य भेषजी' । शिवा रुद्रस्य भेषजीरिति प्राप्ते ॥ तस्मात्सिज्ग्रहणं कर्तव्यम् ॥

न कर्तव्यम् । यदेतद्रात्सस्येति सकारग्रहणं तत्सिचो ग्रहणं विज्ञास्यते ॥ कथम् ? ॥ 'रात्सस्ये'त्युच्यते न चान्यो रेफात्परः सकारोऽस्त्यन्यदतः सिचः ॥

ननु चायमस्ति 'मातुः' 'पितु'रिति । तस्मात्सिचो ग्रहणं कर्तव्यम् ॥ न कर्तव्यम् ॥ कस्मान्न भवति 'चकाद्धि पलित शिर' इति ? ॥

इष्टमेवैतत्सङ्गृहीतं, 'चकार्धी'त्येव भवितव्यम् ॥

* ॥ धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।

आशाध्य तु कथं ते स्याज्जश्त्वं तस्य भविष्यति ॥ १ ॥
मर्त्येनैव प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुक्चापि न मूर्द्धन्ये ग्रहणं सेटि दुष्यति ॥ २ ॥
घसिभस्योर्न सिध्येत्तु तस्मात्सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ॥ ❀ ॥

## दादेर्धातोर्घः । ८।२।३२ ।

इह दोग्धा दोग्धुमिति घत्वस्यासिद्धत्वाद्धत्वं प्राप्नोति ॥ नैष दोषः ।

प्र.] स्यादित्याहु । छान्दस इति । घसिभस्योः सकारस्य लोपे वा रूपसिद्धिरित्यर्थः । 'इष्कर्तारमध्वरस्ये'त्येकदेशानुकरणादिष्कर्तारमध्वरशब्दात्सप्तमी । यदेतदिति । तदेव चोत्तरत्रानुवर्तत इति भावः । मातुरिति । उभयोः स्थाने भवन्नेकादेशस्यान्यतरतो व्यपदेशात् स्थानिवत्त्वाद्रपरत्वे सति सकारस्य लोपः ।

दादेः । घत्वस्यासिद्धत्वादिति । 'पूर्वत्रासिद्ध'मित्यस्य प्रतियोगोपस्थानात्

उ ] नित्यसन्निधानादिति भावः । अर्थान्तरे तत्र प्रयोगाऽभाव एवेति बोध्यम् । तत्र सिचो ग्रहणेऽपि प्रकृते निमाभावमत आह—तदेव चेति । [ धि च ] ॥

1 अयं पाठः क्वचिन्न । २ 'यथा' पा० । ३ श्लोकवार्तिकानीमानि ।

उक्तमेतत्—'अपवादो वचनप्रामाण्या'दिति। अथ वैव वक्ष्यामि—'होढो-ऽदादे.'। हो ढो भवत्यदादे.। ततो 'धातोर्घ.' इति। 'दादे'रित्यनुवर्तते[3] 'ने'ति निवृत्तम् ॥ [एवमपि 'घा] दादे'रित्युच्यते तत्रेद न सिध्यति—अधोक् ॥ क्व तर्हि स्यात्?॥ मा स्म धोक् ॥ नैष दोष.। 'धातो'रिति नैषा दादिसमानाधिकरणा षष्ठी 'दादेर्धातो'रिति ॥ क्व तर्हि ? ॥ अवयवयोगैषा षष्ठी—'धातोर्यो दादिरवयव' इति। सा चावश्यमवयवयोगा षष्ठी विज्ञेयोत्तरार्था ॥ किं प्रयोजनम् ? ॥ 'एकाचो बशो भष्झषन्तस्य स्ध्वो'रिति, इहापि यथा स्याद्र्दभयतेरप्रत्ययो गर्धवेति ॥ यद्यवयवयोगा षष्ठी,—दोग्धा दोग्धुमित्यत्र न प्राप्नोति ॥ एषोऽपि व्यपदेशिवद्भावेन धातोर्दादिरवयवो भवति ॥

प्र ] देनतसूत्रारम्भाच्च घत्वढत्वयोर्विकल्पप्रसङ्ग.। उक्तमिति। न ह्युत्सर्गापवादयोर्विकल्पो युक्त । द्रुहेश्च विकल्पविधिरनर्थकः स्यात्। अदादेरिति। असमर्थसमासो 'दादेर्न भवती'ति। 'धातोर्घ' इत्यत्र दादिग्रहणमनुवर्तते न तु नञ्। एषोऽपीति। प्रयोगभेदाद्भिन्नस्य धातोरयमवयव इति बुद्ध्या परिकल्पनात्।

उ ] दादेर्धा। विकल्पेति। एव चाऽसिद्धवच्छास्त्रबाधो नेतिभाव । नहीति। श्रुत्या प्रकरणबाध एव युक्त इत्याशय । न्यायसिद्धेऽर्थे लिङ्गमप्याह—द्रुहेश्चेति। असमर्थसमासे नञो दादिग्रहणेन सम्बन्धाऽभावात्तस्य सबलस्योत्तरत्रानुवृत्तिरपि दुर्लभेत्याह—धातोर्घ इति। निषेधार्थक 'अ'शब्दस्तु अप्रामाणिक इति तात्पर्यम्। न चाऽत्र न्यासे द्रुहे ढत्वाऽनापत्ति । 'वा द्रुहे'त्यनेन विकल्पद्वारा दानुवृत्त्या तस्यापि विधानादितिभाव । नन्वेवमप्युत्तरत्र दादिग्रहणानुवृत्तिर्व्यर्था, असिद्धत्वेन दादिभिन्नविषये ढत्वस्यैव प्रवृत्त्या घत्वस्याऽभावादिति चेन्न, दादे रित्यस्य उपदेशावस्थादिलक्षकत्वात्। तेन दामलिड् पादलिडित्यादौ वक्ष्यमाणवैयधिकरण्यपक्षेऽपि न घत्व। नच ढत्वमपि न स्याददादेरिति निषेधादिति वाच्यम्, अर्थाधिकारानुरोधेनोपदेशावस्थादादेरेव तेन निषेधादिति भाव । उक्तमर्थमजानान शङ्कते भाष्ये—एवमपीति। 'एकाच' इत्युत्तरसूत्रार्थं प्रसङ्गान्निर्णेतुम् 'अधो'गित्यस्य दादिपदलक्षणाऽसाधारणत्वाऽभाव च दर्शयितु तदुपेक्ष्य समाध्यन्तरमाह—भाष्ये—नैष दोष इति। सा चावश्यमिति। उत्तरार्थेति च। अनेनात्र सूत्रे तस्याऽनावश्यकत्व ध्वनिता। तद्बीजन्तु दादिपदलक्षणया निर्वाह इति। अन्यथा 'अधो'गित्यादौ घत्वप्रवृत्तिप्रयोजना-न्तरसिद्धयेऽत्रैव सूत्रे वैयधिकरण्यानवगत्यावश्यकत्वेनोत्तरार्थत्वेनावश्यक त्वप्रतिपादनस्य निर्बीजतापत्ति'रिति दिक्। प्रयोगभेदादिति। यथा 'शिलापुत्रकस्य शरीर' 'राहो शिर' इत्यादौ। [ दादेर्धातोर्घ ]

१ 'पूर्वत्रासिद्ध'(८–२–१) मित्यत्रोक्तम्। २ अय पाठः क्वचिन्न। ३ रिति वर्तते'पा०

॥ * ॥ हृग्रहो[र्भ]श्छन्दसि हस्य ॥ ॥ हृग्रहोश्छन्दसि हस्य भत्वं वक्तव्यम् । गर्दभेन सम्भरति । सरदस्य गृभ्णाति । सामिधेन्यो जभ्रिरे । उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन् ॥ [ दादर्धानोर्घ ] ।

## दधस्तथोश्च ।८।२।३८।

किमर्थश्चकारः ?॥ [॥*॥ चकारः स्ध्वोरनुकर्षणार्थः ॥*॥] ॥ स्ध्वोरित्येतदनुकृष्यते ॥ कैतदस्ति प्रयोजनम्—सिद्धं स्ध्वोः पूर्वेणैव ॥ न सिध्यति ॥ किं कारणम् ?॥ अझलादित्वात् ॥ ननु च जश्त्वे कृते झलादि ॥ असिद्धं जश्त्वं, तस्याऽसिद्धत्वान्न झलादि ॥ एवं तर्हि सिद्धकाण्डे पठितम् 'अभ्यासजश्त्वचर्त्वमेत्त्वतुको'रिति ॥ एत्वतुकोर्ग्रहणं न करिष्यते । 'अभ्यासजश्त्वचर्त्वं सिद्ध'मित्येव ॥ एवमप्यझषन्तत्वान्न प्राप्नोति ॥ लोपे कृते झषन्तः ॥ स्थानिवद्भावान्न झषन्तः । अत उत्तरं पठति—॥*॥ दधस्तयोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् ॥ * ॥ दधस्तथोरनुकर्षणमनर्थकम् ॥ किं कारणम् ?॥ 'स्थानिवत्प्रतिषेधात्' । प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति ॥ स चावश्यं प्रतिषेध आश्रयितव्यः ॥ * ॥ इतरथा ह्यलोपे प्रतिषेधः ॥*॥ यो हि मन्यतेऽनुकर्षणसामर्थ्यात्सिद्धोऽत्र भवति, अलोपे तेन प्रतिषेधो वक्तव्यः स्यात्—दधाति दधामि ॥ तथोश्चापि ग्रहणं शक्यमकर्तुम् । कथम् ?॥ 'झलि झषन्तस्ये'त्युच्यते तथोश्चाऽत्र झलि झषन्तो भवति नान्यत्र॥

अथाप्येतन्नास्ति 'पूर्वत्रासिद्धे न स्थानिव'दिति, एवमपि नैवाऽर्थोऽनुकर्षणार्थेन चकारेण, नापि तथोर्ग्रहणेन । आनन्तर्यमिहाश्रीयते—'झलि झषन्तस्ये'ति । द्विविधं च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं,

प्र ] दधस्त । एत्वतुकोर्ग्रहणमिति । परिभनिग्रहणं सामान्येन सिद्धत्वस्य ज्ञापकमिति भावः । झलि झषन्तस्येति । झषन्तग्रहणाऽनुवृत्तौ सत्यां झषन्त

उ ] दधस्तथ श्च । दध इति कृतद्विर्वचनस्य धातो ग्रहणम् । परिभनक्तीति । यदस्मात् जश्त्वादेरसिद्धत्वं स्यात् परिभनिग्रहणं न कुर्यात् अनादेशादित्वात्पूर्वेणैव सिद्ध त्वात् तयो सिद्धत्वं सर्वकार्यविषयं ज्ञापयति, तत्त्वेतं पृथग्लेवदर्थं । भाष्ये तथोश्चापीति । येन स्ध्वोश्चेदर्थं । उक्तेति मण्डूकप्लुत्या स्वर्यते कार्यादित्वाकृतार्थं झषन्तस्येत्यनुवृत्तिरपि दधतेर्न्ते दर्शयन्नाह । झषन्ताद्वान्यथानुपपत्त्येति। सर्वत्र स्थानिवद्भा

1 प्रभ त' पा० । २ इद इत्यनेन मन्ये । ३ 'झत्र । ४ दधाति' । ५ 'दधाति' पा० ।

क चिन्नैव सन्निपातकृत नापि शास्त्रकृतम् । लोपे सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम् , अलोपे नैव सन्निपातकृत नापि शास्त्रकृतम् । यत्र कुतश्चिदेवानन्तर्यं तदाश्रयिष्याम ॥ [ दधस्तथोश्च ] ॥

झषस्तथोर्धोऽधः ।८।२।४०।

'अध' इति किमर्थम् ? ॥ घत्त । घत्थ ॥ ॥ ॐ ॥ 'अध' इति शक्यमवक्तुम् ॥ ॐ ॥ कस्मान्न भवति–घत्त धत्थ इति ?॥

॥ॐ॥ नन्वे योगविभाग ॥ॐ॥ [ जश्त्वे योगविभाग ] करिष्यते । इदमस्ति 'दधस्तथोश्चे'ति । ततो वक्ष्यामि–'झला जॅश'। झला जशो भवन्ति दधस्तथो । तत 'अन्ते'। अन्ते च झला जशो भवन्तीति । तत्र जश्त्वे कृतेऽझषन्तत्वान्न भविष्यति ॥

॥ ॐ ॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये अष्टमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥ ~ ॥

रदाभ्यां निष्ठातो न पूर्वस्य च द ।८।२।४२।

रदाभ्यामिति किमर्थम् ? ॥ चरित मुदितम् ॥ ननु च 'रदाभ्या'मित्युच्यमानेऽप्यत्र प्राप्नोति । अत्रापि हि रेफदकाराभ्या परा निष्ठा ॥ न रेफ

---

प्र ] त्वाऽन्यथानुपपत्त्या श्रुतिकृतमानन्तर्यमाश्रीयते । स्थानिवत्त्वकृत तु व्यवधान वचनादप्रतिबन्धकमित्यर्थ । [ दधस्तथोश्च ] ।

झषस्त । तत्रअशस्य इति । 'पूर्वत्राऽसिद्ध'मिति भष्भावे जश्त्वस्याऽसिद्धत्वात् झषन्तत्व । धत्ते तु परस्मिन्सिद्ध जश्त्वमिति धत्वाऽभाव. ॥

इति श्रीकैयटकृते महाभाष्यप्रदीपेऽष्टमस्य द्वितीये प्रथममाह्निकम् ॥

रदा । विचारस्य मद्भावादत्र प्रत्युदाहरणोपन्यास । अत्र प्राप्नोतीति । निष्ठेत्यसमस्त प्रत्ययीक पद, तेन रदाभ्या परा या निष्ठा तस्यास्तकारस्य नत्व

---

ष्ट ] वादिति भाव । श्रुतिकृतमिति । तेन 'दधार्मी'त्यादौ न । एव 'त्थोश्चे'ति भन्थस्तनान् ।

झषस्त । यदि दधस्तथोरस्य विधीयते तदाऽजश्त्वेनात् धत्तइत्यादौ भष्भावो न स्यादत आह–पूर्वत्रेति । इतिभाष्यप्रदीपोद्द्योतेऽष्टमस्य द्वितीये प्रथममाह्निकम् ।

रदाभ्या निष्ठा । भाष्ये प्रत्युदाहरणोपन्यासोऽनर्थक इत्यत आह–विचारस्येति । ननु समासे गुणभूतनिष्ठापदस्य विशेषणत्वबाधयोगेनाऽत्र प्राप्नोतीत्यसङ्गतमत आह–

---

१ 'मकर्तुम्' पा० । २ इद भाष्यमित्यन्ये । ३ अत्र पाठे त्रुटी मन्दः । ४ इद क्वचित्र । ५ हि क्वचित्र । ६ 'निष्ठि मात्र' पा० ।

द्कराभ्यां निष्ठा विशेष्यते ॥ किं तर्हि ? ॥ तकारो विशेष्यते—'रेफद्काराभ्यामुत्तरस्य तकारस्य नो भवति स चेन्निष्ठाया' इति ॥

अथ [ निष्ठादेशे ] पूर्वग्रहणं किमर्थम् ? ॥*॥ निष्ठादेशे पूर्वग्रहणं परस्यादेशप्रतिषेधार्थम् ॥*॥ निष्ठादेशे पूर्वग्रहणं क्रियते ॥ [ किं प्रयोजनम् ? ॥ परस्यादेशप्रतिषेधार्थम्' ] । परस्यादेशो मा भूदिति । भिन्नवद्भ्याम् । भिन्नवद्भिः । छिन्नवद्भ्याम् । छिन्नवद्भिः ॥*॥ पञ्चमीनिर्दिष्टाद्धि परस्य ॥*॥ 'पञ्चमीनिर्दिष्टाद्धि परस्ये'ति परस्य प्राप्नोति ॥ ॥ वृद्धिनिमित्तात्प्रतिषेधः ॥*॥ वृद्धिनिमित्तात्प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् ?॥ ॥*॥ प्रयोजनं कार्तिकौतपौत्य ॥*॥ [प्रयोजनं कार्तिकौतिपौलुय ]। कातिरिति वृद्धौ कृतायां 'रदा

---

प्र ] मिति सूत्रार्थाश्रयणात् । न रेफेति । 'निष्ठात' इति समासनिर्देशः । तत्र निष्ठाया उपसर्जनत्वाद्विशेषणेनाऽसम्बन्धः । प्रधानस्य तु तकारस्य सम्बन्धः ।

अथेति । 'भिन्नवद्भ्या'मित्यादौ निष्ठातकारस्य बहिरङ्गत्वाल्लाक्षणिकत्वाच्च नत्वाऽभावात् पूर्वस्यैव भविष्यतीति प्रश्नः । निष्ठादेश इति । असति पूर्वग्रहणे पाठक्रमे निष्ठा प्रत्यासत्तेति तद्कारस्यैव नत्वेन भाव्यं नाऽन्यस्येति बहिरङ्गलाक्षणिकत्वयोरहेतुत्वम् । निष्ठ-पदस्येत्यधिकारात्पदावयवस्य दस्य नत्वविधानाद्बहिरङ्गत्वं नास्ति। केवलस्य च वर्णस्यानुपदेशाद्वर्णग्रहणेषु लक्षणप्रतिपदोक्तपरिभाषाया अव्यापारः । पञ्चमीनिर्दिष्टादिति । यद्यपि प्रत्यासत्तिर्नापेक्ष्यते तथापि रदाभ्यां परस्य दस्य नत्वेन भाव्यमिति सामर्थ्यान्निष्ठादकारस्यैव नत्वप्रसङ्गः ।

क्षैतिरिति । वृद्धिरेवाऽत्र नत्वस्य निमित्तं, 'क्षियो दीर्घा'दिति वचनात् ।

---

उ ] मिष्येतीति । ननु पूर्वग्रहणाऽभावे रदाभ्यां निष्ठातस्य नो दस्य च प्रत्यासत्त्या निष्ठाया एवेत्यर्थेन रदाभ्यां परस्य दस्य निष्ठासम्बन्धिन एव संभवेन च भिन्नवद्भ्यामित्यादौ दोषोऽत आह—भिन्नवद्भ्यामित्यादावपीति । अहेतुत्वमिति । बहिरङ्गदोषकालिकप्रत्यासत्त्यादेन तयोर्बोध इति भावः । वस्तुतस्तयोः प्रसक्तिरेव नास्तीत्याह—किंचेति । निपाता बहिरङ्गपरिभाषाऽभावाच्चेत्यपि बोध्यम् । केवलस्यचेति । साक्षादुच्चारणेन बोधितं हि प्रतिपदोक्तम् , अनुमेयं च लाक्षणिकं न च दकारादिस्तथा, समुदायघटकत्वेनैवोच्चारणेन तस्य सर्वथानुमेयत्वादिति भावः । इदतो सूत्रस्थभाष्यविरुद्धः । नापेक्ष्यते इति । लक्ष्यानुरोधादिति भावः । लघुक्रमे क्षैते स्तब्ध कार्यं स्तब्ध च दर्शयति—वृद्धिरेवेत्यादिना । बहुव्रीहिपक्षे क्षैते वृद्धिरेव हेतुः ननु वृद्धिनि-

---

१ इद कचिदिति न दृश्यते । २ इदं क्वचो छुप्तम् । ३ इदं क्वचित् ।

स्या'मिति णत्वं प्राप्नोति । क्षैतिरिति वृद्धौ कृतायां 'क्षियो दीर्घा'दिति णत्वं प्राप्नोति । फौड्ढिरिति वृद्धौ कृतायामुदुपधत्वसन्नियोगेन ढत्वमुच्यमानं न प्राप्नोति ॥ अथोच्यमानेऽपि प्रतिषेधे 'वृद्धिनिमित्ता'दिति कथमिदं विज्ञायते,–वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति, आहोस्विद्वृद्धि[1]निमित्तमस्य सोऽयं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति ? ॥ किं चातः ? ॥ यदि विज्ञायते वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति,–क्षैतिः सङ्गृहीतः कार्तिरसङ्गृहीतः । अथ विज्ञायते वृद्धिनिमित्तमस्य सोऽयं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति,–कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतः । उभयथा च फौड्ढिरसङ्गृहीतः ॥ यथेच्छसि तथाऽस्तु ॥ अस्तु तावद्वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति ॥ ननु चोक्तम्–'क्षैतिः सङ्गृहीतः कार्तिरसङ्गृहीत'इति ॥ कार्तिश्च सङ्गृहीतः ॥ कथम् ? ॥ वृद्धिर्भवति गुणो भवतीति[2] रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तते । अथ वा पुनरस्तु–वृद्धिनिमित्तमस्य सोऽयं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति ॥ ननु चोक्तम्–'कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीत'इति ॥ क्षैतिश्च सङ्गृहीतः ॥ कथम् ? ॥ यत्तद्वृद्धि

प्र ] कार्तिरिति । णत्वस्याऽऽकारो न निमित्तं, किं तु रेफ इति प्रतिषेधो न प्राप्नोति । उभयथेति । न हि वृद्धिर्णत्वस्य निमित्तं नापि वृद्धिहेतुकः परो निष्ठातकारः । न चाऽत्र ष्टुत्वनिषेध इष्यते । रेफशिरा इति । ननु चाऽऽकाररूपस्याऽक्परिमाणस्य च वृद्धिसंज्ञाविधानात्कथमारित्यस्य वृद्धिसंज्ञा । अथ मूर्धान्तत्वाद्रेफस्य वृद्धिग्रहणेन ग्रहणमित्युच्यते तदा किमनेनोक्तेन– रेफशिरा गुणवृद्धिसंज्ञक'इति । यद्यपि प्रसज्यमानोऽण् रपरो न भवेदपि तूत्तरकाल रपरत्वं विधीयते तथापि तद्गुणत्वात्कार्तिः सङ्गृहीत एव । एवं तर्हि स्थितपक्षप्रदर्शनात्पूर्वोक्तदोषाऽभावः ।

उ ] मित्तक इति तदसङ्ग्रहः । नहीति । उदुपधत्वमेव हि तस्य निमित्तं न वृद्धिः । षष्ठ्यन्तत्वेऽप्यसङ्ग्रहं दर्शयति–नापीति । यथा कार्तिरित्यत्र वृद्धिनिमित्तादेश परो निष्ठान्तकारो नैवमिहेत्यर्थः । नचात्रेति । एवं च फौड्ढिरनेन निषेधनाऽसङ्गृहीत इत्यर्थः । अक्-रूपस्य–आ इत्येवं रूपस्य । अक्परिमाणस्य–द्विमात्रस्य । तत्कथं तृतीयमात्रस्य । एवं च रेफशिरस्कस्य वृद्धिसंज्ञा वाऽभावात् कथं कार्तौ प्रतिषेधप्राप्तिरिति भावः । अथेति । एवं च वृद्धिग्रहणेन ग्रहणाद्वृद्धिसंज्ञकत्वव्यवहार इति भावः । किमनेनोक्तेनेत्युक्त, तदुक्तेरैव परस्य स्पष्टयति यद्यपीत्यादिना । एवं तर्हीति । प्रसज्यमानोऽण्णपर इत्यस्यैव तत्र सिद्धान्ते

१ 'वृद्धेति पा० । २ इति क्वचिन्न । ३ वर्जने पा० ।

दीर्घादिति किमर्थम् ? ॥ अक्षितमसि मा मे क्षेष्ठा । दीर्घादिति शक्य-मकर्तुम्[1] ॥ कस्मान्न भवति—अक्षितमसि मा मे क्षेष्ठा इति ? ॥ निर्देशा-देवेदमभिव्यक्तं[2] दीर्घस्य ग्रहणमिति । यदि ह्रस्वस्य ग्रहणं स्यात् 'क्षे'रित्येवं[3] ब्रूयात् ॥ नाऽत्र निर्देशः प्रमाणं शक्यं कर्तुम्[4] । यथैवाऽत्राऽप्राप्ता[5] विभक्ति-रेवमियङादेशोऽपि ॥ नाऽन्वाऽप्राप्ता विभक्तिः, सिद्धाऽत्र विभक्तिः 'प्राति-पदिका'दिति ॥ कथं प्रातिपदिकसंज्ञा ? ॥ 'अर्थवत्प्रातिपदिक'मिति ॥

ननु चाऽधातुरिति प्रतिषेधः प्राप्नोति ॥ नैष धातुर्धातोरेषोऽनुकरणम्[6] ॥ यद्यनुकरणमियङादेशो न प्राप्नोति ॥ 'प्रकृतिवदनुकरणं भवती'तीयङादेशो भविष्यति ॥ यदि 'प्रकृतिवदनुकरणं भवती'त्युच्यते स्वाद्युत्पत्तिर्न प्राप्नोति ॥ एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्त इति[7] । अथाप्येतर्ह्यस्ति

प्र ] क्षियो । अक्षितमिति । क्षयः क्षितमिति भावे क्तः । भावश्च ण्यदर्थ इति दीर्घाऽभावाद्गुणाऽभावः । क्षेरिति । इयङादेशात्परत्वाद्धेर्ङितीति गुणः स्यात् न्याय्यत्वात् । नात्र निर्देश इति । न हीयङादेशाद्दीर्घस्य ग्रहणं प्रत्येतुं शक्यते, इयङ्निमित्तस्य विभक्तेर्दुर्लभत्वात्ततोऽप्राप्ता यथा विभक्तिः सौत्रत्वान्निर्देशस्य भव त्येव ह्रस्वस्यापीयङादेशः स्यादिति दीर्घग्रहणमर्थवत् । नैष धातुरिति । क्रियावा-चिनो धातुसंज्ञाविधानसामर्थ्यान्निर्देशे चाऽक्रियावाचित्वात् । प्रकृतिवदिति । अर्थभेदादनुकार्यानुकरणयोर्भेदाद्वाचनिकः कार्याऽतिदेशः । स्वाद्युत्पत्तिर्नेति । अधातुरिति प्रसक्ते. प्रातिपदिकसंज्ञानिषेधादनुकरणस्यापि तत्प्रसङ्गात् । आति-देशिकानामिति । अतिदेशः प्रयोजनं येषां तान्यातिदेशिकानि । अतिदेशभा-न्युच्यन्ते । ननु यदतिदेशकार्येणाऽविरुद्धं स्वाश्रयं कार्यं तन्मा निवर्तत्, यत्तु

उ.] क्षियो दी । क्षय क्षितमिति । अत्र त्वकर्मकत्वाच्चरितार्थ अकर्मकत्वाद्वा दीर्घाभावः । क्षियो वृत्तिस्था दीर्घसङ्ग्रहात्मकस्योदाहरणं बोध्यम् । ननु विभक्तेर्दुर्लभत्वं तदर्थमेव दल कार्यं, इयङादेशस्तु दीर्घनिर्देशे प्रमाणमेवेत्यत्राह—ततोऽप्राप्तेति । एव च सन्देह निवृत्तये दीर्घा दिनी नि भाव । ननु 'धी'त्यस्यतो पाठात्तुद्यो न धातुरनन्तरं अह—क्रियेति । निर्देशे स्वरूपपरत्वादिति भाव । निषेधादिति । पर्युदासपक्षेऽपि आनुमानिको निषेधोऽस्त्येव शास्त्रतात्पर्यविषयभूत इति भाव । अतिदेश प्रयोजनमिति । प्रधानउद्देश-निमित्तकार्यं निष्पन्ने तदनोन्यथं । तदाह—अतिदेशमात्रेति । यत्तु विरुद्धमिति । तन्त

१ 'वक्तुम्' पा० । २ 'वेद व्यक्त' पा० । ३ 'ह्रस्व' पा० । ४ 'वक्तुम्' । ५ 'यथैव प्राप्ता' पा० । ६ करण' पा० । ७ इति क्वचित् । ८ 'प्रसङ्ग भाति' पा० ।

'आतिदेशिकाना स्वाश्रयाण्यपि न निवर्तन्ते' इत्येवमपि न दोष । अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या । तद्यथा— नेर्विश ' 'परिव्यवेभ्य क्रिय ' 'विपराभ्यां[1] जे'रिति ॥ अथाप्येतन्नास्ति[2] 'प्रकृतिवदनुकरण भवती'त्येवमपि न दोष । धातोरजादौ यद्रूप तदनुक्रियते ॥ [ क्षियो दीर्घात् ] ॥

प्र ] विरुद्ध तत्कथ न निवर्तेत[3] । एव तर्ह्यधातुरिति पर्युदासो न प्रसज्यप्रतिषेध इत्यातिदेशिकस्य कार्यस्याऽभावाद्धातोरन्यत्वात् स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्तते, प्रसज्यप्रतिषेधे तु निषेध एवातिदेशिक स्यात् । इयङादेशस्त्वातिदेशिको धातो विधीयमानत्वाद्भवति, स च दीर्घस्यैवेति दीर्घग्रहणमनर्थकम् । अथापीति । यद्यप्यधातुरिति प्रसज्यप्रतिषेध इति भाव । अवश्यमिति । यस्मा प्रातिपदिक सज्ञानिषेधादप्राप्ता यस्माच्चोत्पन्ना लुप्ता तस्मात्सर्वस्मादित्यर्थः । नेर्विश इति । न रिति लुप्तविभक्तिकाव्ययानुकरणान्निर्देशाऽर्थो विभक्ति , विश इति निर्देशादे श्चाऽप्राप्ता विभक्ति । इयङ् तु दीर्घानुकरणस्यैवेति दीर्घग्रहणमनर्थकम् ।

अथापीति । इहानुकर्ता कदाचित्सामान्यमनुकरोति कदाचिद्विशेषम् । तत्र यदा सामान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृत्या वदृष्टत्वादनुकरणेऽप्यभाव । यदा तु विशेषोऽनुक्रियते तदा तन्निबन्धन कार्य मनुकरणे प्रवर्तते । तत्र यदा धात्वधातुसामान्य क्षिमात्रमनुक्रियते तदेयङोऽप्रा प्तिरिति चिक्षियतु रित्यादौ कृतेयङ्कदेशस्येदमनुकरणमिति दीर्घादिति कर्तव्यम् ।

उ ] पदिकात्व । नहि अनिर्देशकत्वस्याभावेन विरुद्धत्व । प्रसज्यप्रतिषेधेऽपीति । वस्तुत पर्युदासपक्षेऽप्यनिर्देशेन धातुत्व बोधिते धातुभिन्नत्वाऽभावेन प्रातिपदिकत्वाऽभावोऽनिर्देश फलमिति तत्प्रवृत्तिरस्त्येव । यद्यप्येतत्साधारण शास्त्रीय तथापि शास्त्रान्तरविषय भवत्येव । नहीत्थ च स्वाऽऽश्रय प्रातिपदिकत्व न भवेत् यथाऽपक्वतण्डुलानि यादौ प्रातिपदिकत्व नेति वक्तु शक्यत् । अथ प्येतन्नापि भाष्यस्याऽयमेवाऽर्थ । विरुद्धानि स्वाऽऽश्रयाणि निवर्तन्त एवेति दैवगोऽन्यत्रात्र लघुत्वा सामान्यप्रवृत्तभाष्यस्य विनाऽनुपपत्तिम धातुरिति प्रातिपदिकमहात्मपविशेषपरत्वाऽयोगात् आतिदेशिकाना मित्यादिवचनाऽभ्युपेत्य । आदागम भुवि इत्याद्यार्थ निर्देशविरुद्धमयथाना इति निवृत्तश्च । विश इति । अत्रा विभक्तिर्निर्देशादेवेत्यन्वय । अप्रातिपदिकत्वानुकरणत्वेन धातुत्वादिति भाव । ननु वचने ऽप्यप्रति कथ नाम्नीत्युच्यतेऽत आह– इहानुकर्तेति । सामान्य–धात्वधातुसाधारण क्षिरूप मित्यर्थ । विशेषमिति । धातुमात्रमित्यर्थ । अत्र धात्वधातुसामान्य क्षिमात्रमिति पाठ । तदेयङोऽप्राप्तिरिति । धातुत्वाऽभावादिति भाव । कर्तव्यमिति । इदमेव दीर्घग्रहण

1 नैर्देशिकत्वम् पा० । 2 'अथवा पा० । 3 इद क्वचित् ।

अञ्चत्यर्थ इति चेदञ्जिरप्यञ्चत्यर्थे वर्तते ॥ कथं पुनरन्यो नामाऽन्यस्यार्थे वर्तते ?॥ कथमञ्जिरञ्चत्यर्थे[1] वर्तते ?॥ अनेकार्था अपि धातवो भवन्तीति[2] ॥ अस्ति पुनः क्वचिदन्यत्राऽप्यञ्जिरञ्चत्यर्थे वर्तते ? ॥ अस्तीत्याह । अञ्जेरञ्जनम्, अञ्जनं च प्रकाशनम् । 'अङ्क्तेऽक्षिणी' इत्युच्यते यत्तत्सितं[3] चाऽसितं चैतत्प्रकाशयति[4] । तथाऽञ्जेर्व्यञ्जनं व्यञ्जनं च प्रकाशनम् । यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां रश्मिमात्रमभिव्यवस्थापनं स रागस्तद्व्यञ्जनम् । अन्वर्थं खल्वपि निर्वचनं 'व्यज्यतेऽनेनेति व्यञ्जन'मिति ॥ [ अञ्चोऽनपा ] ।

प्र.] प्लुकि टिलोपे च रूपम् । अञ्जेरिति । ननु यद्यप्यञ्जिस्तदर्थस्तथाप्यञ्चतेः सोऽर्थो भवतीति तस्य 'व्यक्त'मिति न सिध्यति, 'व्यक्न'मिति प्राप्नोति । एवं तर्हि 'व्यक्त'मित्युक्ते प्रकाशनं न गम्यत इति व्यक्तशब्दप्रकृतिरञ्चिरेव प्रकाशने वर्तते न त्वञ्जिरित्यदोषः । कथं पुनरिति । अर्थान्तरे स्थितोऽन्यः—अन्यस्याऽर्थान्तरवाचिनोऽर्थे—कथं प्रवर्तत इत्यर्थः । अनेकार्था इति । धातुपाठे च क्रियावाचित्वप्रदर्शनपरोऽर्थनिर्देशो न तु नियमार्थः । तथा च 'कुर्द खुर्द गुर्द गुद क्रीडायामेवे'त्येवकारं पठन्ति । अस्ति पुनरिति । अन्यत्र दर्शने व्यक्तशब्देऽपि तदर्थत्वमञ्जेः शक्यते साधयितुं नाऽन्यथेति प्रश्नः । अञ्जनमिति । अज्यते येनाऽक्षिणी तदञ्जनम् । तत्रैतस्याकृतिशब्दोऽयम्, रूढिषु च व्युत्पत्तिनिमित्तमेव क्रिया न तु शब्दप्रवृत्तिनिमित्तमित्याशङ्क्याऽङ्क्तिशब्दमुदाहरति—अङ्क्ते इति । व्यत्ययेन छान्दसमात्मनेपदम् । यत्तत्सितं चेति । सिताऽसिते सुतरां विभागेन प्रकाशयतीत्यर्थः । तथेति । व्यज्यतेऽनेन रस इति व्यञ्जनम् । राग इति । रज्यतेऽनेनेति रागो व्यञ्जनमेव । अन्वर्थमिति । यौगिको व्यञ्जनशब्द इत्यर्थः ।

उ.] इति भाष्यादङ्कः पदे लक्षणे चेति धातुरत्नार्थ इत्यन्ये । टिलोपे चेति । किं मनोऽर्थाकि भाष्यकारेण टिलोपस्याऽनिष्टेश्चिन्त्यमिदं तस्मादङ्कुरस्य ... इति भाष्यमित्यन्ये । नन्विति । अनिष्टनिवृत्त्यर्थं वचनमावश्यकमिति भावः । न त्वञ्जिरिति । प्रकाशनार्थत्वेनानभिधानेन निष्ठाऽभाव इति भावः । अर्थान्तर इति । अञ्जू व्यक्तिम्रक्षणगतिषु इति पाठात् । अर्थान्तरेति । प्रकाशनादिवृत्ते । अन्यत्रेति । अन्यशास्त्रदर्शने तु विवादविषये निर्णेतुं न शक्यत इत्यर्थः । अज्यते—प्रकाश्यते इत्यर्थः । अथ परस्मैपदित्वादाह—व्यत्ययेनेति । व्यज्यतेऽनेनेति । जिह्वाया जडीभावनिराकरणेन रसो व्यज्यत इत्यर्थः । भाष्येऽपि—'इन्द्रिय'शब्देन जिह्वैव । क्वचित्तु बाहुवचनं । भाष्ये—रश्मिमात्र

१ 'रञ्चेरर्थे' । २ इति क्वचिन्न । ३ 'यत्तदस्मिन्सित' पा० । ४ 'यत' पा० ।

परिकृशे ॥ * ॥ जगत्यनूना भवति हि रुचिरा ॥ * ॥ [ जगत्यनूना[2] भवति हि रुचिरा ] ॥ * ॥ फलेर्ल्त्वे उत्पूर्वस्योपसङ्ख्यानम् ॥ ५ ॥ फलेर्ल्त्वे उत्पूर्वस्योपसङ्ख्यानं कर्तव्यम्। उत्फुल्लोऽनृत[3] कथयति॥ अत्यल्पमिदमुच्यते उत्पूर्वादिति ॥*॥ उत्फुल्लसफुल्लयोरिति वक्तव्यम् ॥*॥ उत्फुल्ल । सफुल्ल ॥

कृशो क एष हि विहित इगुपधान्स्वरे हि दोषो भवति परिकृशे ॥

पदस्य लोपो विहित इति मत जगत्यनूना भवति हि रुचिरा ॥ १ ॥

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।८।२।५६।

किमयं विधिराहो स्वित्प्रतिषेध ? ॥ किं चात ? ॥ यदि तावद्विधि नकारग्रहणं कर्तव्यम् ॥ न कर्तव्य । प्रकृतमनुवर्तते ॥ क प्रकृत ?॥ 'रदाभ्या निष्ठातो न पूर्वस्य च द' इति ॥ तद्वा अनेनेन निपातनेन व्यवच्छिन्न न शक्यमनुवर्तयितुम् ॥ अथ प्रतिषेधो, ह्रीग्रहणमनर्थकं, न ह्येतस्माद्विधिर स्तीति ॥ यथेच्छसि तथास्तु ॥ अस्तु तावद्विधि ॥ ननु चोक्त—"नकारग्रहण

प्र.] दप्रयोग एव लोपस्तत्र गमिं प्रति परिरुपसर्गो न तु कृशिमित्यनुपसर्गत्वा- त्परेर्निष्ठान्त एव कृशशब्द । अव्ययस्वरेणाद्युदात्त परिकृशशब्द, परेर्गति- त्वाऽभावात् । जगतीति । येय परिकृशशब्दस्य व्युत्पत्ति प्रदर्शिता सा रुचिरा अनूना-परिपूर्णा रूपे स्वरे च दोषाऽभावात् । [अनुपसर्गात्फुल्ल] ॥

नुदविद । किमयमिति । कश्चिद्विधिनाऽर्थी कश्चित्प्रतिषेधेन, ततो वक्ष्य माणोऽभिप्राय । नकारग्रहणमिति । प्रतिषेधे तु नुदादिभ्यो यत्प्राप्नोति तत्र

उ.] स्वरेणान्तोदात्त स्यात् नत्र नेष्यत इति तनुरज्जुवृत्तिरेवात्र कृशि । एव चाद्युदा त्तत्वनेष्यते, न च कृशे कर्तरि के नत्वमस्तीति भाव । कर्तरि क्ते इ'ष पाठात्तु युक्त । निष्ठान्त एवेति । एतच्छब्द प्रसिद्धो । कथं पुनरेव मर्तीत्यवगीऽत आह—अव्ययस्व रेणेति । 'तत्पुरुषे तुल्यार्थे' त्यनेन । गतित्वाऽभावादिति । तेन थाथघञित्यन्तोदात्तत्व नेतिभाव । भाष्ये पर्यागत कारयेनेति। परिकृशशब्दे कृशशब्दो भावप्रधान । कृशत्वन परित प्राप्त इत्यर्थ । तेन परित कृश इत्यनाम इति भाव । जगति-शब्दव्यव हारे सर्वत्र । [ अनुपसर्गात्फुल्ल ] ॥

नुदविदोन्द । कमिदिति । विधानु । तस्याऽप्रसक्तादिति भाव । कश्चिदिति । तदतिरिक्त सर्व । तेषा प्राप्तत्वादिति भाव । ननु प्रतिषेधेऽपि निषेध्यसमर्पणाय नकारग्रहण कर्तव्यमेवेत्यत आह-प्रतिषेधे न्विति । उत्तरसूत्रस्थो नत्रमेव पठनीय इति

---

१ पर्यागत परिकृश' पा० । २ इद व्याख्या भाष्ये नास्ति । ३ 'नून पा० । ४ भाष्यवार्तिकमन्यत्र वा वार्तिकम् । ५ 'अनेन निपात' पा० । ६ अनर्थक भवति' पा० ।

'येयोर्विदो र्थेशावुँचौ तयोर्नत्वस्य वार्नत्रौ ।
ययोर्स्तु इयन्नौ ताभ्यां छिदिर्वैचद्वदिष्यते ॥

अपर आह—

॥ * ॥ वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दते ॥ * ॥

भित्तं शकलम् ।८।२।५९।

'भित्तं शकल'मित्युच्यते तत्रेदं न सिध्यति–भिन्नं भिन्नमिति ॥

प्र.] विद्लृ लाभे इत्यस्मात्तु भोगप्रत्यययोर्नत्वनिषेधोऽन्यत्र नत्वम् । 'विद सत्ता या'मित्यस्मात्तु नत्वम् । विद ज्ञाने' इत्यस्मात्त्विटा व्यवधानात्प्रसक्त्याऽभाव । तौदादिकात्तु 'विभाषा गमहने'ति क्वसौ विकल्पविधानाद्यस्य विभाषेति निष्ठायामिट्प्रतिषेध । तनवचन इति । तस्य नस्तन , तस्य वचनमिति समास । तत्तु इति । त'दिति लुप्तषष्ठीकम् । उ' इत्यनर्थको निपात पादपूरणार्थ । विन्तेरिति । विन्त इति तिङन्तानुकरणात्षष्ठी । [ वित्तो भोगप्रत्यययो ] । भित्त । भिन्नमिति । नञ्त्ववाचिना भित्तशब्देन सामानाधिकरण्या

उ ] नत्व तथा विद्यतेरित्यर्थं । पर्यवपन्न इति । इ' मति इणान्तर प्राप्त इत्यर्थं । यद्य प्रत्ययस्येन तथापि प्रयोगे धातोरनन्तर श्रूयमाणत्वात्तदवयवत्वप्रतिभानाद्विदि पर्यवपन्नत्युक्तं, तत्र बोजान्याह–तुदेति । शब्दपरविप्रतिषेधाद्विति । यद्य'प विप्रतिषेधसूत्र कार्यशब्देन शास्त्रीय प्रहानुमुचित तथापि विरोध परस्य बलवत्त्वदर्शनादत्रापि तथैव बल्पन । यद्यप्यत्र परत्वमिति सूत्रस्थभाष्यरी या पूर्वत्राह्रचयमन्तरङ्ग तथा'प व्याख्यानादेव निर्णयो बोध्य । एव विभाषागमहनविदविशा मिति सूत्रेपि बोध्यम् । विद्लृलाभ इति । अस्यैव भोगप्रत्यययोवृत्तिसम्भवादिति भाव । सत्ताविचारणयोरद तदसम्भव इति तात्पयम् । क्वचित्तु विदिर्लाभ इति कैयटे पाठ । इयति यादि भाष्य व्याचष्टे–विद् सेति । ननु तौदादिकस्याऽनि'कारिकानु पाठाऽभावात्कथ कुतो नत्वमित्यत आह तौदादिकात्त्विति । तत्र हि व्याख्यानात्तौदादिकस्यैव ग्रहण ननु ज्ञानार्थस्येविकरणस्येत्यर्थं । भाष्य यानप्रावृत्ति । विकल्पनिषेधावित्यथ । ननु रौधादिकस्य विन्दा निरह विन्तेरेव न भवितव्य कथ विन्दरि युक्तत आह–तिङन्तेति । तेन न्दयोः धातुरूपत्व इति भाव । भाष्ये–वित्तो भोगेष्विति भोगग्रहण प्रत्ययस्याप्युपलक्षण । [वित्तो भोगप्रत्यय] रिभत्तं श । पक्षान्तरेऽपि समाधिमाह–विशेषोपक्रमेऽपीति । निमित्तप्रवृत्तिनिमि

१ श्लोकवार्तिकम् । २ 'यद्योर्विदो प्रशाम्तुरी' ३ दुत्तौ पा० । ४ 'न्नौ पा० । ५ चेत्त्वमि । चेत्। ६ पा० । ६ 'वित्तस्तु पा० । ७ वेत्त पा० । ८ भोग वित्तश्च विन्दते इति पा० ।

अनवकाश कुत्व लोप बाधेत[1] ॥ सावकाश कुत्वम् ॥ कोऽवकाश ? ॥ अनन्त्य ॥ कथ पुन सत्यन्त्ये[2]ऽनन्त्यस्य कुत्व स्यात् ?॥ आचार्यप्रवृत्तिर्ज्ञापयति[4] नान्त्यस्य कुत्व भवती'ति यदय 'क्विन कु'रिति कवर्गनिर्देश करोति, इतरथा हि तद्गुणमेवाऽस्य निर्दिशेत् ॥ इद तर्हि प्रयोजन—येभ्य क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि पदान्ते[3] कुत्व यथा स्यात् ,–माना असाक्। मानो अद्राक् ॥

क्विन कुरिति वैफल्ये प्रत्ययग्रहण कृतम् ।
क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यत ॥ १ ॥

प्र ] स्यात् । लोपे कृत इति । अन्तरङ्गो लोप कुत्व तु बहिरङ्ग, पदस्येति विधानात् । अनवकाशमिति । क्विनादिषु सावकाश लोप विशेषविहित कुत्व बाधेतेति भाव । अनन्त्य इति । क्विन्प्रत्ययापेक्षयाऽनन्त्य पदस्य त्वन्त्य इति ज्ञेयम् । 'पदस्ये'ति हि स्थानषष्ठ्या अन्त्येऽन्युपमहारादन्त्यस्यैव कुत्वेन भाव्य यदि तु पदस्येत्यवयवषष्ठी स्यात्तदा घृतस्पृशेत्यादावपि कुत्व स्यात् । कथ पुनरिति । 'सत्यपि सम्भवे बाधन भवती'ति लोप बाधित्वा कुत्वेन भाव्यमिति भाव । यदयमिति । अनेकस्य स्थानिनोऽनेकादेशप्रतिपत्तये वर्गग्रहण मकारस्यैव तु स्थानित्वे घकार एव निर्दिशेत । 'वर्गाणा तृतीयचतुर्था' इति शिक्षाया मकारघकारयोर्गुणसाम्यप्रतिपादनात् । इद तर्हीति । क्विन्प्रत्ययहेतुप्रकृतिधातूपलक्षणमिति तस्मिन्सत्यसति वा तत्प्रकृतेर्धातो पदस्य कुत्व भवति। अस्नागिति । सृजिदृशिभ्या माङि लुङ् । तिप् । सिच । 'बहुल छन्दसी'ति विधानादीण्न भवति । हल्ङ्यादिलोप । 'सृजिदृशोर्झल्यमकिती'त्यमागम । 'वदव्रजे'ति वृद्धि । 'बहुल छन्दस्यमाङ्योगेऽपी'त्यडागम । 'सयोगान्तस्य लोप' । 'व्रश्चभ्रस्जे'ति षत्वे प्राप्ते कुत्व जस्य ग , शस्य ख । 'वावसान'

उ ] अन्तरङ्ग इति । प्रत्ययमात्रापेक्षत्वादिति भाव । वैशेषिकत्वादस्य 'सिद्ध कुत्वमिति बोध्यम् । ननु पदस्येत्यधिकारादन्त्येन्दुपरिभाषया पदान्तस्यैव कुत्व स्यादिति कथमनन्त्योऽवकाश स्यादत आह—क्विन्प्रत्ययेति । ननु पदस्येत्यस्य विशेषणताया अनुक्त्वा कथ स्थानषष्ठी स्यादत आह—यदि त्विति । शिक्षायामिति । दन्त्योष्ठ्यस्यापि महाप्राणता तत्रोक्तेत्याहु । धातूपलक्षणमिति । अनुप्रासविशनत्रुत्री हिसेत्यर्थं । जस्य ग इति । अज्ञागित्यत्र । अद्राक्ष्यित्यत्र—शस्य ख इति । 'वर्णानां प्रयत्नादिनादा'

1 बाधेत पा० । २ सत्यन्ते प० । ३ इद कचित । ४ 'सिद्ध सद्' ।

॥ * ॥ सिद्धं तु सुपि प्रतिषेधात् ॥ ॥ सिद्धमेतत् ॥ कथम् ? ॥ 'सुपि प्रतिषेधात्' । प्रसज्यायं प्रतिषेध -'सुपि ने'ति ॥ इहाऽपि तर्हि न प्राप्नोति अहर्ददाति अहर्भुङ्क्त इति ॥ * ॥ लुकि चोक्तम् ॥ * ॥ [लुकि चोक्तम्] ॥ किमुक्तम् ? ॥ 'अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवती'ति ॥

## अम्नरूधरवरित्युभयथा छन्दसि ।८।२।७०।

॥ * ॥ छन्दसि भाषायां च प्रचेतसो राजन्युपसङ्ख्यानम् ॥ * ॥ छन्दसि भाषायां च प्रचेतसो राजन्युपसङ्ख्यानं कर्तव्यम् । प्रचेतो राजन् । प्रचेता राजन् ॥ ॥ अहरादीनां पत्यादिषूपसङ्ख्यानम् ॥ * ॥ अहरादीनां पत्यादिषूपसङ्ख्यानं कर्तव्यम् । अहर्पतिः । अहः पतिः । [ अहXपतिः ] अहर्पुत्र । अहः पुत्र । [ अहXपुत्र । ] गीर्पति । गीः पति । [ गीXपति ] । धूर्पति । धूः पति । [ धूXपति ] [ अम्नरूधरवरि ]

## वसुस्रंसुध्वंस्वनडुहां दः ।८।२।७२।

इह कस्मान्न भवति–पपिवान् तस्थिवानिति ? ॥ 'सस्ये'ति वर्तते ॥

प्र ] प्यते। पर्युदासे चाऽहरित्यत्र रुत्वमेव भवति न तु र । सिद्धं त्विति । प्रत्ययलक्षणेन दीर्घाहा निदाघ इत्यत्र सुप्परत्वाद्रुत्वाऽभाव । 'पूर्वत्रासिद्ध'मिति रुत्वस्याऽसिद्धत्व। पूर्वं नोपधालक्षणो दीर्घ, पश्चाद्रुत्वम् । अहरित्यत्र तु र एव भवति । इहापीति । प्रत्ययलक्षणेन प्रतिषेधप्रसङ्ग । [ रोऽसुपि ] ।

अम्नरूध । प्रचेता राजन्निति । नकारस्य रेफ, तस्य रो रीति लोपे ढ्लोप इति दीर्घ । अहर्पतिरिति । रेफस्य रेफो विसर्जनीयबाधनाय पक्षे छन्दोभाषयोर्विधीयते । [ अम्नरूधरवरि ]

वसुस्र । पपिवानिति । सस्येत्यस्याऽनुवृत्तौ नकारस्य दत्वं प्राप्नोति,

उ ] परमत्रिपदीने उक्त भ्यादित्यर्थ । रुत्वस्यासिद्धत्वादिति । वस्तुस्थितिप्रदर्शनमेतत् । भाष्ये लुमता लुप्ते इति । प्रत्यये परत पूर्वस्य कार्यं न लुमतेति निषेधादिति भाव ।

अम्नरू । रेफ इति । रुत्वे पर प्राप्ते इति भाव । रेफस्य रेफविधाने फलमाह–रेफस्येति । अह पत्यादौ पक्षे उपाख्यानाय । [ अम्नरू ] ॥

वसुस्रसुध्वस्व । लोपं बाधित्वेति । सयोगान्तलोपमित्यर्थ । परत्वादिति भाव ।

१ इद क्वचित्पुस्तके । २ 'न लुमता' ( १-१-६३ ) सूत्रे उक्तम् ॥ ३ इदं न सार्व त्रिकम् । ४ 'विसर्जनाय' इति । ५ उपस्थानायेति पुस्तके । ६ 'अहर्पुत्र' । ७ 'राजन्' ।

## उपधायां च ।८।२।७८।

किमर्थमिदमुच्यते न 'हली'त्येव सिद्धम् ? ॥ न सिध्यति । 'धातो'-रिति [तेन] वर्तते[2] तत्र रेफवकाराभ्यां धातुर्विशेष्यते—रेफवकारान्तस्य धातो'-रिति ॥ किं पुनः कारणं पूर्वस्मिन् योगे रेफवकाराभ्यां धातुर्विशेष्यते [ न पुनः पदं विशेष्यते ? ] । नैवं शक्यम्[3] ॥ इहापि प्रसज्येत[3]—अग्निर्वायुरिति ॥ एवं तर्हि पूर्वस्मिन्योगे यद्धातुग्रहणं तदुत्तरत्र निवृत्तम् ॥ एवमपि 'कुर्कुर' 'मुर्मुर'इत्यत्रापि प्राप्नोति ॥ एवं तर्ह्यनुवर्तते तत्र धातुग्रहणं, न तु रेफवकाराभ्यां धातुर्विशेष्यते ॥ किं तर्हि ? ॥ इग्विशेष्यते—'रेफवकारान्तस्येको धातो'रिति ॥ एवमपि कुर्कुरीयति मुर्मुरीयतीत्यत्रापि प्राप्नोति ॥ तस्माद्धातुरेव विशेष्य । धातौ च विशेष्यमाणे उपधायां चेति वक्तव्यम् ।
॥ * ॥ उपधादीर्घत्वेऽभ्यासजिन्विचतुर्णां प्रतिषेधः ॥ * ॥ उपधादीर्घत्वेऽभ्यासजिन्विचतुर्णां प्रतिषेधो वक्तव्यः । अभ्यासे—रियर्तु रिर्युः । जिन्वि—जिन्वतु

प्र] उपधायां च । पूर्वस्मिन्निति । 'र्वोरुपधाया' इत्यनेनेत्यर्थः । उत्तरत्रेति । 'हलि चे'त्यत्र । कुर्कुर इति । पदावयवस्य रेफस्य उपधाया इको दीर्घो विधीयमानोऽत्रापि प्राप्नोति । धात्वधिकारे तु रेफवकारान्तस्याऽधातुत्वान्न भवति । रेफवकारान्तस्येक इति । अन्तशब्दः समीपवाची, रेफवकारयोर्हल्परयोर्य उपधेक् तस्य धात्ववयवस्य दीर्घो विधीयमानो 'मूर्च्छित'त्यादौ भविष्यति न तु 'कुर्कुर' इत्यादाविर्त्यर्थः । कुर्कुरीयतीति । क्यजन्तस्य धातोरवयव इगिति दीर्घप्रसङ्गः । तस्मादिति । रफवकारान्तस्य धातोर्हल्परस्योपधाया इको दीर्घो विधीयमानो मूर्च्छिते'त्यादौ न प्राप्नोतीति वचनम् । तेन धातोरुपधे यौ रेफवकारौ तयोरुपधाया इको दीर्घः । उपधादीर्घत्व इति । 'जिन्वि'शब्दो 'जीर्यते

उ.] उपधायां च । भाष्ये-हलीत्येवेति । 'गीर्मित्यादिसिद्धये पदावयवरेफान्तस्या ... दीर्घ इत्यर्थं मन्यते । पूर्वस्मिन्निति यस्य हलि चेत्यत्रत्यर्थेऽग्निरिति उदाहरणाऽसङ्गतिरत आह—र्वोरिति । अत्र धातुग्रहणानुवृत्तौ उत्तरत्राप्यनुवृत्तिः सम्बन्धेन नान्यथेत्याशयेन प्रश्न इत्यर्थः । नन्विको रेफवकारावयवत्वमनुपपन्नं विरोधाऽसन्निधानात्तदन्तविधेर्दुर्लभत्वात आह—अन्तशब्द इति । तेन धातोरित्युपधाग्रहणं वोर्विशेषण । षष्ठ्यो द्विवचनस्य स्थाने सम्बन्धे वचनं । धातोरित्यनुवर्तनात् वैयधिकरण्येन वोर्विशेषणं । प्रत्ययसुपधाग्रहणमिको विशेषणं । तच्च दर्पेक्षं पूर्वत्वमाचष्टे इति भावः । धातोरुपधारेफ इति । व'रिरक्षेत्यादौ

१ इह न दृश्यते । २ 'तत्रापि' पा० । ३ नैव शक्यं विनाऽऽदेशे भाष्ये इह नाश्नुर' पा०

सचिन्नु । [अभ्यासे] ॥ चिचि । चतुर्यिता चतुर्यितुम् ॥ * ॥ उणादिप्रतिषेधश्च ॥ * ॥ उणादीनां च प्रतिषेधो वक्तव्यः । गिर्यौ गिर्यौरिति ॥ अभ्यासप्रतिषेधस्तावन्न वक्तव्यः । हली'त्युच्यते न चात्र हलादिं पश्यामः ॥ यणादेशे कृते प्राप्नोति ॥ स्थानिवद्भावान्न भविष्यति ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति ॥ नैषोऽस्ति प्रतिषेधः । उक्तमेतत्—'प्रतिषेधे स्वरदीर्घयलोपेषु लोपाऽजादेश'इति ॥ चिचिप्रतिषेधश्च न वक्तव्यः । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' ॥ चतुर्यिता चतुर्यितुमिति—'सुपि चे'ति वर्तते ॥ यद्येवं गीर्भ्यां गीर्भिरित्यप्रसिद्धिः ॥ न सुपो विभक्तिविपरिणामाद्गीर्भ्यां गीर्भिरित्यदोषः ॥ 'उणादिप्रतिषेधो वक्तव्य' इति,—परिहृतमेतत्,—'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति ॥ [उपधायां च] ।

## अदसोऽसेर्दादु दो मः ।८।२।८०।

॥ * ॥ अदसोऽनोत्रे ॥ * ॥ अदसोऽनोत्रेरिति वक्तव्यम् ॥ किमिदमनोऽत्रेरिति ? ॥ अनोकारस्य, असकारस्य, अरेफस्येति । अनोकारस्य—अदोऽत्र ॥ असकारस्य—अदस्यति । अरेफस्य अदः ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । क्रियत न्यास एव । अविभक्तिको निर्देशः—'अदस् ओ अस' इति । ओकारात्परः प्रतिषेधः पूर्वभूतः । ततः सकारः । ततो रेफ इति ॥

प्र ]तिन् रथ व' इति व्युत्पन्नः । नन्वोणादिप्रतिषेधश्चेति सिद्धः प्रपञ्चार्थः पाठः । चतुर्यितेति। चतुर इच्छतानि क्यच् । तृच् । इट् । अतो लोपे कृते धातोरुपधारेफ इति दीर्घत्वप्रसङ्गः । स्वरेति । पूर्वत्राऽसिद्धे न स्थानिव दिति स्थानिवत्त्वनिषेधाद्दीर्घं प्राप्नोति, तस्मादभ्यासप्रतिषेधो वक्तव्य एवत्याहु । न सुप इति। सुप परो यो हल् तस्मिन्योर्वोर्दाघा न भवतीत्यर्थः । [उपधायां च] ।

उ ]भ्यासिद्धत्व तु न वैयाकरणेन स्थानत्र न प्रवर्तते । इत्याहुरिति। 'पूर्वत्रासिद्धे नै'त्यस्यापि न नियम इति तु भाष्याशय इत्यत्राऽरुचिः । भाष्ये सुपि चेति वर्तत इति । आधारत्वविवक्षया सप्तमी । सुबन्तावयवस्यवो नेत्थ इति भावः । एतेन चतुर्यिते त्यादौ अन्तर्वर्तिसुपो लुका लुप्तत्वेन विशिष्टोत्तर सुपो व्यवहितत्वेन न दोष इत्यपास्तम् । सुप पर इति । सप्तम्यन्तस्य पञ्चम्या विपरिणाम इति भावः । [ उपधायां च ]॥

अदसोऽसे । वार्तिके—अनोत्रेरिति बहुव्रीहि इकार उच्चारणार्थः । अविभक्तिकोऽकार

१ इद क्वचिन्न । २ 'उणादीनां' । ३ भवति' पा० । ४ विभक्तिपरि' पा० । ५ 'अरेफकस्य' पा० । ६ अस ओ' इति पा० । ७ नन्वोण' । ८ 'प्रपञ्चार्थं' पा० ।

अथ वा नैव विज्ञायते–'अदसोऽसकारस्ये'ति ॥ कथं तर्हि ?॥ अकारोऽस्य मकारस्य सोऽयमसि[1], अमेरिति ॥ यद्येवममुमुयङ्ङिति न सिध्यति, अदम्ब ङ्ङिति प्राप्नोति ॥ अदमुयङ्ङिति भवितव्यम् 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति ॥

॥ * ॥ अदसोऽद्रे पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥ * ॥

॥ * ॥ तत्र पदाधिकारादपदान्तस्याऽप्राप्तिः ॥ * ॥ तत्र पदाधिकारादपदान्तस्य न प्राप्नोति–अमुया अमुयोरिति ॥ ॥ सिद्धन्तु मकारप्रतिषेधात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ 'सकारप्रतिषेधात्' । यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्योऽपदान्तस्यापि भवतीति ॥

प्र ] अदसोऽसे । ओकारात्पर इति । सूत्रे तावत्पदानि निर्दिष्टान्युत्तरकालं तु यथेष्टमभिसम्बन्धं लक्ष्यसंस्कारकत्वान्ययमुपलभमानमभिमतमर्थं सम्पादयति । असेरिति । यत्र मकारस्य त्यदाद्यत्वं क्रियते तत्र मुत्वं नान्यत्रेत्यर्थः । यद्येवमिति । त्यदाद्यत्वाऽभावान्मुत्वाऽप्रसङ्ग । अदमुयङिति । सेर्यस्येत्येतदनाश्रयणेऽपि नैवाऽमुमुयङिति भाव्यमित्यर्थः । अदसोऽद्रेरिति । ये–न मि अमिरिति मकारान्तप्रतिषेधमाश्रयन्ति नाऽन्त्यसदेशपरिभाषा, तेऽमुमुयङितीच्छन्ति । यथा 'चलीक्लृप्यत'इति रेफद्वयस्य लत्वम् । अन्त्यसदेशपरिभाषाश्रये त्वदमुयङिति ये तु त्यदाद्यत्वविषये एव मुत्वमिच्छन्ति ते अदद्र्यङिति मन्यन्ते । असेर्हीति । अ. सेर्यस्य सोऽसिस्तस्येत्यर्थः । यदयमिति । 'अदस्यती'त्यत्र 'न' वये'इति नियमाददसोऽपदस्यान्मुत्वं न भविष्यतीति किं निषेधेन [1]। निषेधात्त्वपदस्याऽप्यदसो मुत्वं भवति–अमुयेति, पदस्याऽपि–अमुष्य अमूभ्यामिति । अन्त्य-

उ ] मकाररेफस्याऽदम इत्यर्थः । 'अद'इ'न विसर्गस्याऽसिद्धत्वाद्रेफान्तं । भाष्ये–ओकारात्पर प्रतिषेध पूर्वंभूत इति । भूतपूर्वं –पूर्वरूप प्राप्त इत्यर्थः । 'ओ'इति लुप्तषष्ठीक । मेर्'इति रेफान्त । तथैव इकार उच्चारणार्थ इति बोध्यम् । 'असे'रित्यसमर्थसमास । ओकारमकारदेश त्यस्याऽदसो न मुत्वमित्यर्थः । तदाह–सूत्रे इति । अत एवादोऽनुपदश इति निर्देश सङ्गच्छते । अकारोऽस्येति भाष्येण व्यधिकरणबहुव्रीहिरित्युक्त । तदाह–यत्रेति । त्यदाद्यत्वमित्युपलक्षणमाकारस्यापि । तेनाऽमूदृक सिद्धयति । अदसोद्रेरिति । एवं तन्त्रेणार्थद्वयेऽपि सूत्रतात्पर्यं, लक्ष्यानुरोधाच्च व्यवस्था । आचार्यमतभेदाच्च रूपत्रयमपि

१ 'अ अग्द' । २ 'स्येति' पा० । ३ 'दपदस्या' पा० । ४ 'मकारस्य' पा० । ५ अमेरिति' ।

अथ दाद्ग्रहणं किमर्थम् ? ॥ ॥ * ॥ दाद्ग्रहणमन्त्यप्रतिषेधार्थम्[1] ॥ * ॥ दाद्ग्रहणं क्रियते ॥ [ किं प्रयोजनम्[2] ? ॥ ] 'अन्त्यप्रतिषेधार्थम्'[3] ॥ अलोऽन्त्यस्य[4] मा भूत् । अमुया अमुयोरिति ॥ [ अदसोऽसेर्दादुदोम ] ।

## एत ईद्बहुवचने ।८।२।८१।

॥ * ॥ ईत्व बहुवचनान्तस्य ॥ * ॥ ईत्वं बहुवचनान्तस्येति वक्तव्यम् । 'बहुवचन' इतीयत्युच्यमाने इहैव स्यात्-अमीभिः अमीषु । इह न स्यात्-अमी अत्र, अमी आसते इति ॥ तत्तर्हि वक्तव्य ? ॥ न वक्तव्यम् । नेह पारिभाषिकस्य बहुवचनस्य ग्रहण ॥ किं तर्हि ? ॥ अन्वर्थग्रहणमेतत् । बहूनामर्थाना वचन बहुवचनं, बहुवचन इति ॥ [ एत ईद्बहु ] ॥

## वाक्यस्य टेः प्लुत उदात्तः ।८।२।८२।

वाक्याधिकारः किमर्थः ? ॥ * ॥ वाक्याधिकारः पदनिवृत्त्यर्थः ॥ * ॥ वाक्याधिकारः क्रियते । [ किं प्रयोजनम्[5] ? ] ॥ 'पदनिवृत्त्यर्थः' । पदाधिकारो

---

प्र ] स्येति । 'अलोऽन्त्यस्ये'ति वचनादमुयेत्यत्र यकारस्योत्व स्यात् ।

एत ईद्बहुवचने । ईत्वमिति । 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे सम्प्रत्यय' इति वचनात्प्रत्ययस्य बहुवचनस्य ग्रहणेन भाव्य, ततश्च 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानाद्बहुवचने परत एकारस्येत्वेन भाव्यममीभिरित्यादौ, नत्वमी इत्यत्रेति भावः । नेहमिति । उभयगतिरिह शास्त्रे भवतीति प्रतिपादित, तत्र व्याप्तिन्यायाश्रयादिहाऽर्थग्रहणम् । [अदसोऽसेर्दादु दो म ]

वाक्यस्य टे । वाक्यस्थस्यैव पदस्य प्रयोगो न केवलस्येति मत्वाह वाक्याधिकार इति । पदनिवृत्त्यर्थ इति । पदस्येति यत्प्रस्तुत तन्निवृत्त्यर्थः ।

---

उ.] मात्वमिति भाव । परन्तु 'यत्रेव'मित्याद्यपूर्वपक्षीयत्वमदमुयङिति भवितव्यमिति भाष्योक्तेरेतदव रूप भाष्याभिप्रेतम् । अथवाऽनि व्याख्यादृष्टमेवेदं, शेषश्चोक्तपक्षद्वयप्रदर्शनपरानुवादमात्रमपरैरेषिन । अतएवाग्रेऽसेरिति प्रतिषेधं शास्त्री पुनरमि याह ।

एत ईत् । प्रत्ययस्य बहुवचनस्य-तत्प्रकरस्य । ग्रहणेन भाव्यं । बहुवचनग्रहणेनेति शेष । [ एत ईद्बहुवचने ] ॥

वाक्यस्य टे. । ननु वाक्यस्थस्यैव पदस्य यथा स्यान्न केवलस्येति पदविशेषणार्थं वाक्याधिकार स्यादत आह-वाक्यस्यस्येति । तत्रश्चाऽव्यभिचारात्र पदविशेषणेनाऽर्थं इति भाव । 'प्रविश पिण्डी'मिति केवलस्यापि प्रयोगदर्शनादिद चिन्त्य । नन्वधिकारस्याधिकारान्तर

---

१ 'अन्त्यस्य' पा० । २ इदं लुप्तम् । ३ इद क्वचिन्न्यम् । ४ 'अन्त्यस्य' पा० । ५ इति क्वचित् । ६ इदं लुप्तम् ।

निवर्त्यंते ॥ न हि काको वाश्यत इत्यधिकारा निवर्तन्ते । दोष खल्वपि स्याद्यदि वाक्याधिकार पदाधिकार निवर्तयेत् । इष्यन्ते पूर्वोत्तरत्र पद-कार्याणि, तानि न सिध्यन्ति—'नश्छव्यप्रशा'निति ॥

पदनिवृत्त्यर्थमिति नैव विज्ञायते,—पदस्य निवृत्त्यर्थं[2] पदनिवृत्त्यर्थमिति ॥ किं तर्हि ? ॥ पदे निवृत्त्यर्थं पदनिवृत्त्यर्थमिति । वाक्ये यावन्ति पदानि तेषां सर्वेषां टे प्लुत प्राप्नोति, इष्यते च वाक्यपदयोरन्त्यस्य[3] स्यादिति, तदन्तरेण यत्न न सिध्यतीत्येवमर्थो वाक्याधिकार ॥

अथ टिग्रहण किमर्थम् ? ॥*॥ टिग्रहणमलोन्त्यनियमे व्यञ्जनान्तार्थम् ॥*॥ टिग्रहण क्रियते । [किं प्रयोजनम् ? ॥ 'अलोऽन्त्यनियमे व्यञ्जनान्तार्थम्'] । अलोन्त्यनियमे व्यञ्जनान्तस्यापि यथा स्यात्—अग्निचि३त् सोमसु३त् ॥ अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥

॥ ॥ सर्वादेशप्रसङ्गस्तु ॥ ~ ॥ सर्वादेशस्तु टे प्लुत प्राप्नोति ॥ किं कारणम् ? ॥ 'अच' इति वचनादन्त्यस्य न, 'अन्त्यस्येति' वचनादचो न,

प्र.] नहि काक इति । नहि वाक्यग्रहणस्य पदाधिकारनिवृत्तिर्वाच्या यथा काक-वाशितस्येत्यर्थ । विरोधाऽभावाच्चाऽशक्य पदाधिकारो निवर्तयितु, वाक्यस्य स्थैपदस्यैव कार्याभ्युपगमादित्याह—दोष इति । नश्छव्यीति । इतीन्यादावपदा-न्तस्य रुत्वं भवति । नैवमिति । 'पदस्ये'त्यनुवर्तत एव । पदस्य टे प्लुतो मा भूत्पदवाक्ययोर्यष्टिस्तस्यैव यथा स्यादित्येवमर्थं तु वाक्यग्रहणमित्यर्थ । टिग्रह-णमिति । भवति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषापस्थानाद्चा तदन्तविधौ सत्यन-न्तस्यैव वाक्यस्याऽलोऽन्त्यस्येति वचनादन्त्यस्याचो नपुसकह्रस्व इव प्लुत स्यात्। टिग्रहणे तु तदुपादानसामर्थ्याट्टिनाऽज्विशेष्यत, तथा च टेरिति हलन्तस्यापि प्लुत सिध्यति । सर्वादेशप्रसङ्गस्त्विति । अच इत्ययमलोन्त्यशेष इति भाव । अच इति वचनादिति । इह तस्याऽनुपस्थानादिति भाव । सर्वादेश इति ।

उ] निवर्चत्वं दृष्टमित्यत आह—विरोधाभावाच्चेति । भाष्ये—पदे निवृत्त्यर्थमिति । पद परत पूर्वपदान्तस्य प्लुतनिवृत्त्यर्थमित्यर्थं । वाक्यान्तस्यैव पदान्तस्य यथा स्यादित्ययमिति भावस्तदाह—पदस्य टेरिति । भाष्ये—अलोन्त्यनियमे इति । अऽलोन्त्यनियमे सति व्यञ्जनान्तस्य न स्यात्तदर्थमित्यर्थस्तदाह—असतीति । सति तु पदावयवटेरेव वयस्याऽच इत्यर्थं इति भाव । इह तस्येति । अच इत्यस्याऽलोन्त्यस्येत्यस्य चैत्यर्थं ।

१ वर्त्यन्ते' पा० । २ इद क्वचिन्न । ३ 'रन्त्य स्या' पा० । ४ इद श्रुति स्यात् ।

उच्यते ॥ प्लुत ॥ स सर्वादेश प्राप्नोति ॥ ॥ उक्त वा ॥५॥ [उक्त वा][2] ॥ किमुक्तम् ? ॥ 'ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थित द्रष्टव्य'मिति ॥ [ वाक्यस्य टे प्लुत ]

### प्रत्यभिवादेऽशूद्रे। ८।२।८३।

अशूद्र इति किमर्थम् ? ॥ कुशल्यसि तुषजक ! ॥ अल्पल्पमिदमुच्यते 'अशूद्र' इति। ॥१॥ अशूद्रस्त्र्यसूयकेषु ॥*॥ अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्[3]। तत्र शूद्र उदाहृतम्। स्त्रिया-गार्ग्यहं भो, आयुष्मती भव गार्गि !। असूयक-स्थाल्यहं भो ॥ आयुष्मानेधि स्थालीऽ३न्[4] ॥ नैषा मम संज्ञा स्थालीति

प्र ]हलन्तस्य टेः सर्वस्य स्थाने इत्यर्थः। उक्तवेति। द्वितीया षष्ठी 'अच' इति प्रादुर्भाव्यते तत्र टिनाऽचो विशेषणादच एव स्थाने प्लुतो भवति। [वाक्यस्य टे ]॥

प्रत्यभिवादे। गार्ग्यहं भो इति। केचिदाहु – न ह्यभिवादयते पादोपसङ्ग्रहणान्येव तु करोति'। अन्ये त्वाहु –'अभिवादयते न तु स्वनाम गृह्णाति। अभिवादप्रत्यभिवादौ च नामगोत्राभ्यामिति स्त्रीप्रतिषेधो न विधेय'। ये तु स्त्रिया नाम्नाऽभिवादप्रत्यभिवादाविच्छन्ति तन्मतेनाऽयं प्रतिषेधः। नैषा ममेति। असूयक प्रत्याचष्ट–प्रत्यभिवादवाक्यान्तस्थस्य नाम्नो गोत्रस्य च प्लुत इष्यते नान्यस्येति यौगिकस्य प्लुतो न विधेय। तत्र प्रत्यभिवादयित्रा स्थालीशब्द संज्ञा मत्वा प्लुतो विहित। यत्र तूपहासार्थमसूयकत्वमाक्षिपति तदाऽसौ प्रत्यभिवाद नार्हत्याशीर्वचन हि प्रत्यभिवादो गृह्यते। प्रतिसम्भाषणमात्रन्तु प्रत्यभिवाद मत्वा वार्तिककृताऽसूयक प्रतिषेध उक्त। शूद्रेऽप्याशीर्वचनरूपप्रत्यभि

उ ] परस्परविरोधिनोभयोरपि त्यागादिति भाव। भाष्ये–स सर्वादेश प्राप्नोतीत्युत्तर। तस्मादच इति वक्तव्यमिति शङ्को बोध्यस्तदेवाह–उक्त वेति। उक्त वेति च पङ्क्तिपाठे तु सम्याव। तथैं वा वाक्यक्रं ।द्वितीयेति। पदोपस्थितिपक्ष एव तत्र स्थितो न ॥ नष्टत्य पक्ष इति भाव। [ वाक्यस्य टे प्लुत उदात्त ]

प्रत्यभिवादे। अभिवादयितर्यनुग्रहद्योतकमाशीरूप कुशलादिप्रश्नरूप वा वाक्यमात्र प्रत्यभिवाद। तदाह–भाष्ये कुशल्यसि तुषजकेति। नत्वभिवादयते इति। अभिवादाऽभावे प्रत्यभिवादस्य नुनरागमाभाव इत्यर्थ। ये त्विति। इदमेव भाष्यमतम। भाष्ये 'एषा नि भवेत्यर्थकम्। 'आयुष्मान्भव सौम्य नि स्मृतौ भवेत्यर्थान्तर। नाम्न इति। इदमस्य सत्राभूत स्येत्यर्थ। प्रत्यभिवाद नार्हतीति। विपरीत शापमेवार्हतीत्यर्थ। आशीर्वचन हीति। इद हि प्रत्यभिवादयितर्यनुग्रहद्योतक कुशलप्रश्नादेरप्युपलक्षण। प्रतिसभाषणमात्र

१ 'उक्तव'। २ दृ० कचित्र। ३ 'वाच्य'। ४ स्थालिऽ३न्। ५ 'स्थानिन'।

[ति] ॥ किं तर्हि ? ॥ दण्डिन्यायो मम विवक्षित वक्तव्य - स्यादय ह भोः ॥ आयुष्मानेधि स्थाल्न् ॥ न मम दण्डिन्यायो विवक्षित ॥ कि तर्हि ? ॥ सत्ता ममैषा ॥ असूयकस्त्वमसि जाल्म न त्व प्रत्यभिवादमर्हसि भिद्यस्व वृषल ! स्थाल्न् ! ॥*॥ भोराजन्यविशा वा ॥*॥ भो राजन्य विशा वेति वक्तव्यम् । देवदत्तोऽह भो , आयुष्मानेधि देवदत्त भो ३ । [आयुष्मानेधि] देवदत्त भो । भा ॥ राजन्य–इन्द्रवर्माऽह भो । आयुष्मानेधीन्द्रवर्मा३न् । [आयुष्मानेधि] इन्द्रवर्मन् ॥ राजन्य ॥ विट्–इन्द्रपालितोऽह भो । आयुष्मानेधीन्द्रपालिता ३ । [आयुष्मानेधि] इन्द्रपालित ।

अपर आह—॥*॥ सर्वस्यैव नाम्न प्रत्यभिवाद भोशब्द आदेशो वा वक्तव्य ॥*॥ देवदत्तोऽह भो । आयुष्मानेधि भो ३ । आयुष्मानेधि देवदत्ता ३ इति वा ॥ इह कस्मान्न भवति–देवदत्त कुशल्यसीति ? ॥ इह किं चिदुच्यते किंचित्प्रत्युच्यते । प्रधानमुच्यतेऽप्रधान प्रत्युच्यते ।

प्र ]वादाभावात्प्रतिषेधो न विधेय इति केचिदाहु । स वक्तव्य इति। अभिवादयिता प्रत्यभिवादयितैव वक्तव्य इत्यर्थ । भिद्यस्वेति । कर्मकर्तर्यात्मनेपदम् । भो राजन्यविशा वेति । भो शब्दा–भवच्छब्द , सम्बुद्ध्यन्तो निपातो वा । सर्वेति । नामगोत्रशब्दमन्तरेण प्रत्यभिवादो नास्तीति समाचारे भो शब्दस्याऽसाधुत्वे प्राप्त वचनम् । इह कि चिदिति । पदस्येति वर्तते तद्विशेषण प्रत्यभिवाद इति, तेन प्रत्यभ्युद्यमानार्थवाचिन पदस्य वाक्यान्तस्य टे प्लुत्या भाव्य नान्यस्येत्यर्थ । प्रधानस्यस्येति । सत्क्रियमाणस्य प्राधान्य । कुशल्यसीति । साध्याया

उ ] मिति । अभिवादयितृनुग्रहयोग्यकर्म याद्दृश वचन । केचिदाहुरिति । अनुग्रहस्य कुशलप्रश्नार्थपि प्रत्यभिवाद इत्यत्राऽऽह्नि । कर्मकर्तरीति । स्वयमेव भिन्नो भवत्यर्थ ।

ननु भवच्छब्दस्तेन निपातेन वा भो शब्देन सिद्ध आदेशविधान व्यर्थमत आह–नाम गोत्रेति । एवच भवत्येव प्राप्तविभाषेति तात्पर्यम् । आद्यमते तु भो शब्दाऽप्राप्त विभाषा इतरयोस्तु प्राप्तविभाषेति बोध्यम् । तत्रेति । प्रत्यभिवादे इति विषयसप्तमी । यत्पद प्रत्यभिवादविषय साक्षाद्वक्ति तस्य प्लुत । तच्च नाम गोत्र वा । अत्र नामपद न वाक्यान्ते इति भाव । ननु क्रियाया एव भवन प्राधान्यमत आह सत्क्रियमाणस्येति । अभिवादयित्रनुग्रहार्थकत्वात्तस्य तेन तस्य सत्कार्यत्वमिति भाव । साध्याया अपीति । अतएव शब्देन प्रधानाया अपीत्यर्थ । भाष्ये–प्रधानमुच्यत अप्रधान प्रत्युच्यते इति। अस्यार्थ –प्रधान सत्कार्य देवदत्तादिक प्रथमत उच्यते । अप्रधान सत्कारक

१ इद हस्तिन्न । २ अप्रधान । ३ प्रधान पा० ।

नत्र[1] प्रधानस्थस्य च[2] टिसङ्कस्य[3] प्लुतया भवितव्य न चाऽत्र प्रधानस्थ टिसञ्ज्ञम् ॥ इहापि तर्हि न प्राप्नोति—आधेयोऽग्नी३र्नाधेया३[4] इति ॥ नैतद्विचार्यते—आधेयोऽनाधेयोऽग्निश्चेद्ववर्तीति ॥ किं तर्हि ? ॥ इहो[5]ऽग्निसाधना क्रिया विचार्यते—आधेयोऽग्निर्नाधेय इति ॥ यद्येव द्वितीयोऽग्नि[6]शब्दस्य प्रयोग प्राप्नोति ॥ 'उक्तार्थानामप्रयोग' इति न भविष्यति ॥

यद्येवमा[7]धेयशब्दस्यापि तर्हि द्वितीयस्य प्रयोगो न प्राप्नोति—'उक्तार्थानामप्रयोगो भवती[8]'ति ॥ नैष दोष । उक्तार्थानामपि प्रयोगो दृश्यते । तद्यथा

प्र ] अपि क्रियाया सस्कारित्वेन विवक्षितत्वादप्राधान्यम् । क्वचित्पाठ —'अप्रधानमुच्यते प्रधान प्रत्युच्यते' इति । तस्याऽर्थ —अभिवादवाक्ये श्रुतो देवदत्तादिरेव प्रत्युच्यते, कुशल्यसीत्यनेन तु पूर्वमश्रुतत्वान्न प्रत्युच्यते, किं त्वपूर्वमेवोच्यते । इहापीति । द्रव्यस्य विचार्यमाणत्वात्प्राधान्य मन्यते । नैतदिति । न ह्याधानाऽनाधानकर्मविशेषविषयो विचारो, नाप्यग्निविशेषविषय —किमाहवनीयोऽय दक्षिणाग्निरिति, किं तर्ह्याधान कर्तव्य न कर्तव्यमिति तत्साधनक्रिया विचार । यद्येवमिति । 'नाधेयोऽग्नि'रित्यत्र द्वितीयोऽग्निशब्दो निदर्श्य । उक्तार्थानामिति । अग्निरेव प्रकृतत्वादपेक्ष्यत इत्यर्थ । उक्तार्थानामपीति । उक्ताऽर्था

उ ] कुशल्यसीत्येन[तु]न प्रत्युच्यत—पश्चादुच्यते । एवञ्च वाक्यान्ते प्रधानस्य टेरभावान्न भवतीति भाव । तद्धान तु यैयटेनोक्तमेव । अभिवादवाक्ये इति । अन्यत्र सिद्धस्यैव हि सस्काराथमनुवादो युज्यते इति भाव । अतएव सबोधनविभक्त्या निर्देश । भाष्यस्थ— प्रत्युच्यत इत्यस्याऽनूद्यत इत्यर्थ । अपूर्वमिति । विधेयत्वादिति भाव । एवञ्चाऽनूद्यमानस्य वाक्यान्तस्थत्वाभावान्न प्लुत इति तात्पर्यम् । अत्र पक्षे प्रधानस्थस्ये त्यस्याऽनूद्यमानस्येत्यर्थ । द्रव्यस्येति । अग्निरूपस्येत्यर्थ । एवञ्च तद्वाचिन एव वाक्यान्तस्य टे प्लुत स्यान्न तु नाधेय इत्यस्येति भाव । विचार्यमाणत्वादिति । द्वयोर्वैकल्पिक विचारविषयत्वादित्यर्थ । न हीति । आधेयोऽग्नि'रित्यत्र त्रितयमस्ति अग्निशब्दवाच्य द्रव्य । धातुवाच्या क्रिया प्रत्ययवाच्य कर्म । तत्र क्रियाविषय एव विचारो नेतरविषय । तत्राग्नि किमाधानकर्मत्वेन विवक्षित उत नाधानक्रियाया इति न विचार्यते इत्यर्थ । योऽग्निराधेय इत्यपि नेत्याह—नापीति । तत्साधनक्रिया—अग्निसाधनाधानक्रिया । आधेयोऽग्निरित्यत्र क्रियावाचिनोऽन्यपदत्वाऽभावाच्चद्रूपलक्षितद्रव्यवाचिनो वाक्यान्तस्याग्निपदस्यापि प्लुत इति बोध्यम् । प्रधानस्थस्य प्रधानक्रियोपलक्षितस्थस्य च तेन प्लुतो विधायते अत चाधेयोऽग्निनाऽऽधया ३' इति भाष्यप्रयोग एव मान । तन्त्वर्थप्रत्यायनाय शब्दप्रयो

१ 'नन्य' पा० । २ इदं क्वचिन्न । ३ सङ्कस्य' पा० । ४ 'आधेयोऽग्निर्नाधया३' । ५ 'इहे'ति क्वचिन्न । ६ 'अग्नि' पा० । ७ 'यद्येव'मिति क्वचिन्न । ८ 'नाम भवती'ति' पा० ।

'अपूपौ द्वावानय' 'ब्राह्मणौ द्वावानये'ति ॥ [ प्रयमिवादेऽशुद्रे ]

## दूराद्धूते । च ८।२।८४ ।

दूराद्धूत इत्युच्यते दूरशब्दश्चायमनवस्थितपदार्थकस्तदेव हि कंचित् प्रति दूरं कंचित्प्रत्यन्तिकं भवति । एवं हि कश्चित्कंचिदाह-'एष पार्श्वतः करकस्तमेनमानये'ति । स आह—'उत्थाय गृहाण, दूरं न शक्ष्यामी'ति । अपर आह-'दूरं मथुरायाः पाटलिपुत्र'मिति । स आह-'न दूरमिदमन्तिक'मिति । एवमेष दूरशब्दोऽनवस्थितपदार्थकस्तस्याऽनवस्थितपदार्थकत्वान्न ज्ञायते-'कस्यामवस्थायां प्लुतेन भवितव्य'मिति ? ॥ एवं तर्हि ह्वयतिनाऽयं निर्देशः क्रियते 'ह्वयतिप्रसङ्गे यद्दूरम्' ॥ किं पुनस्तत् ? ॥ यत्र प्राकृतात्प्रयत्नात्प्रयत्नविशेषेऽनुपादीयमाने सन्देहो भवति, 'श्रोष्यति न श्रोष्यती'ति, तद्दूरमिहाऽवगम्यते ॥ [ दूराद्धूते च ] ॥

## हैहेप्रयोगे हैहयोः । ८।२।८५ ।

प्र.] भिन्नता उक्तार्था सादृश्यादुच्यन्ते, तत्रतत्तु यथा वृषवृषभशब्दौ भिन्नौ, तथाऽपूपावानय अपूपौ द्वावानयेत्येतौ, समुदायावेवार्थवन्तौ लोके प्रयुज्येते । प्रयोगानुसारेण लक्षणव्यवस्थाश्रीयते, तेनोक्तार्थानां प्रयोगेऽव्यवस्था नोद्भावनीया ।

दूराद्धूते च । तदेवेति । दूरस्याऽनवस्थितत्वात्प्लुतस्य विषयविभागो न व्यवतिष्ठत इत्यर्थः । ह्वयतीति । ह्वानक्रियापेक्षं दूरत्वमाश्रीयते न तु श्रोत्रादिपुरुषापेक्षमित्यर्थः । [ दूराद्धूते च ] ।

हैहेप्रयोगे हैहयोः । पूर्वेण हूयमानार्थस्य पदस्य वाक्यान्तस्य टेः प्लुतवि

उ.] गाच्छब्दान्तरेणोक्ते किमर्थं तत्प्रयोगोऽत आह तत्रतत्रत्विति । यथा वृषवृषभयोरखण्डपदवादेऽत्यन्तभेदेऽपि अवयवे ध्वनिसाम्याद्वृषशब्दत्वभ्रमस्तथाऽनयोरत्यन्तभेदेऽपि सादृश्यादवयवे तत्त्वभ्रम इति न पौनरुक्त्यमिति भावः । नन्वेवं 'वृषो वृषभ' इत्यपि प्रयोगः स्यादित्याशङ्क्य 'स्थितस्य गतिश्चिन्तनीया' इति न्यायेन प्रयोगानुसाराद्व्यवस्थेत्याह-प्रयोगेति ।

दूराद्धूते च । ह्वानेति । दूरस्थपुरुषप्रबोधाय यदाह्वानमित्यर्थः । दूरादिति । 'दूरान्तिकार्थेभ्य' इति पञ्चमी । भाष्ये यत्र प्राकृतात्प्रयत्नाद्विशेषे अनुपादीयमाने इति पाठः । विशेषे-अधिक यत्ने । [ दूराद्धूते च ] ।

हैहेप्र । ननु दूराद्धूते हैहयोर्दूराद्धूतेचेति सूत्रान्तरेण सिद्धत्वादिदमनर्थकमित्यत

१ 'किंचि' पा० । २ एतन्नेति क्वचित् । ३ 'मधुरा' पा० । ४ 'विशेष उश पा० । ५ इति क्वचित् ।

हैहेग्रहणं किमर्थम् ? ॥*॥ हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम् ॥*॥ हैहेप्रयोगे हैहेग्रहणं क्रियते ॥ किमर्थम् ? ॥ ['हैहयोः प्लुत्यर्थम्'] । हैहयोः प्लुतिर्यथा स्यात् । देवदत्त है३ देवदत्त हे३ । अक्रियमाणे हि हैहेग्रहणे तयोः प्रयोगेऽन्यस्य स्यात् ॥ अथ प्रयोगग्रहणं किमर्थम् ? ॥*॥ प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् ॥*॥ प्रयोगग्रहणं क्रियते । [किं प्रयोजनम् ? ॥ 'अर्थवद्ग्रहणेऽनर्थकार्थम्' । ] अर्थवद्ग्रहणेऽनर्थकयोरपि यथा स्यात् । देवदत्त है३ । देवदत्त हे३ ॥ अथ पुनर्हैहेग्रहणं किमर्थम् ? ॥*॥ पुनर्हैहेग्रहणमनन्त्यार्थम् ॥*॥ [पुनर्हैहेग्रहणं क्रियते ॥ किं प्रयोजनम् ? ॥ 'अनन्त्यार्थम्'] । अनन्त्ययोरपि यथा स्यात् । है३ देवदत्त हे३ देवदत्तेति ॥ [ हैहेप्रयोगे ]

## गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।८।२।८६।

॥*॥ गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात् ॥*॥ गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतं न प्राप्नोति । देवदत्त३ ॥ किं कारणम् ? ॥ 'अन्येन विहितत्वात्' । अन्येन हि लक्षणेन लघोरन्त्यस्य प्लुतो विधीयते

प्र ] सम्बोधनहैहयोर्न प्राप्नोति वचनम्। हैहयोः प्लुत्यर्थमिति । अन्यथाऽऽरभ्यमाण-ष्योदनन्त्यस्यापि हूयमानवाचिन एव प्लुतः स्यात्—देवदत्त है ३ इत्यादौ । अनर्थकयोरपीति । यदा तु प्राक् सम्बोधनपदं प्रयुज्यते तदा हैहयोर्द्योत्याभावादानर्थक्यं, यदा तु तयोः प्राक् प्रयोगस्तदाऽऽमन्त्रणाभिव्यञ्जकत्वादर्थवत्त्वम्। अनन्त्ययोरपीति। अन्यथा वाक्यस्य टेरित्यधिकारादनन्त्ययोर्न स्यात्।

गुरोः । गुरोः प्लुतविधान इति। 'अनन्त्यस्यापी'त्यपिशब्देन गुरोः सन्निधानात् स एवाऽन्त्य समुच्चीयते, तेन यत्र गुरुरन्त्यस्तत्रैव पर्यायः स्याल्लघौ त्वन्त्ये पूर्वेण लघोः स्यादनेन चाऽनन्त्यस्य गुरोरित्यर्थः । न चेति। अपिशब्देन

उ.] प्राक्-पूर्वेणेति । आमन्त्रितस्यैव हूयमानार्थवृत्तित्वं, हैहयोस्तु न तदर्थत्वमपि तु तद्द्योतकत्वमित्यर्थः । भाष्ये—हैहयोरिति । अन्त्ययोरित्यर्थः । अन्यथेति । 'हैहेप्रयोग' इत्येतदुच्यमाने इत्यर्थः । है देवदत्तेत्यादौ पूर्वेण सिद्धिरिति भावः । आनर्थक्यमुपदर्शयति—यदेति । द्योत्याभावादिति । सम्बोधनेनैवाऽऽभिमुख्यस्य द्योतितत्वादिति भावः । प्रयोगग्रहणं तु यथा कथञ्चित्तयोः प्रयोग एव सिद्धे यथोक्तरूपेणानर्थकयोरपि हैहयोः प्लुतसिद्धिरित्यर्थः । [ हैहेप्रयोगे हैहयोः ]।

गुरोरनृतः । लघौ त्वन्त्ये इति । तत्र पूर्वेणैवान्त्य इत्यर्थः । प्रकृतेऽपि

१ इदं त्रुटितं भवेत् । २ इदं वार्तिकम् । ३ 'देवदत्त३' प० ।

'दूराद्धूते चे'ति ॥ ॥ न वाऽनन्त्यस्यापीति वचनमुभयनिर्देशार्थम् ॥ ॥ नैष दोषः ॥ किं कारणम् ? ॥ [ अनन्त्यस्यापीति वचनमुभयनिर्देशार्थम्' ] । अनन्त्यस्यापीति वचनमुभयनिर्देशार्थं भविष्यति 'अनन्त्यस्यापि गुरोरन्त्यस्यापि टे'रिति ॥ ननु चैतद्गुर्वपेक्षं स्यात् अनन्त्यस्यापि गुरोरन्त्यस्यापि गुरोरिति ? ॥ नेत्याह । ट्यपेक्षमेतत् । अनन्त्यस्यापि गुरोरन्त्यस्यापि टेरिति ॥ अथ प्राग्वचनं किमर्थम् ? ॥ ॥ प्राग्वचनं विभाषार्थम् ॥*॥ प्राग्वचनं क्रियते ॥ [ किं प्रयोजनं ? ॥ 'विभाषार्थम्' ]॥ विभाषा यथा स्यात् ॥ * ॥ प्राग्वचनानर्थक्यं चैकैकस्येति वचनात् ॥ * ॥ [प्राग्वचनमनर्थकम् ॥ किं कारणम् ?॥ 'एकैकस्येति वचनात्']। एकैकग्रहणं क्रियते तद्विभाषार्थं भविष्यति ॥ अस्त्यन्यदेकैकग्रहणस्य प्रयोजनम् ॥ किम् ?॥ युगपत्प्लुतो मा भूदिति ॥ 'अनुदात्तं पदमेकवर्ज'मिति वचनान्नाऽस्ति यौगपद्येन सम्भवः ॥ असिद्धः प्लुतस्तस्याऽसिद्धत्वान्नियमो न प्राप्नोति। नैष दोषः । यद्यपीदं तत्राऽसिद्धं तस्य तु सिद्धम् ॥ कथम् ? ॥ 'कार्यकालं संज्ञापरिभाष'मिति। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं। 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्'। उपस्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति ॥ इहापि तर्हि समावेशो न प्राप्नोति–देवदत्ता ३ ॥ सिद्धाऽसिद्धावेतौ । यौ हि

प्र ] प्रकृतोऽष्टः समुच्चीयते न तु गुरुरेवाऽन्त्य इत्यर्थः । विभाषार्थमिति । तेन पक्षे न कस्यचित्प्लुतो भवति । इतरथा तु पक्षेऽनन्त्यस्य प्लुतः पक्षे त्वन्त्यस्य टेरित्येवमर्थं प्राग्ग्रहणमनेनोक्तमिति मन्वाह प्राप्नोतीति । यद्यपीदमिति । यथोद्देशपक्षे । इहापीति । आमन्त्रितस्यादिरुदात्त इत्युदात्तः प्लुतोदात्तत्वेन न समाविशेत्, वर्ज्यमानस्वरप्रसङ्गात्। यदा चाऽऽम एकान्तरमित्यनेन निघातैकश्रुतिनिषेधस्तदेदमुदाहरणम् । सिद्धासिद्धाविति । आमन्त्रितस्यादिरुदात्तः सिद्धः,

उ.] रिति । तेन सर्वत्र पर्याय'स्तदिरिति भाव । भाष्ये–उभयनिर्देशार्थमिति । गुरुगुरुवोरित्यर्थः । इत्येवमर्थमिति । अन्यथोदात्तानुदात्तयो प्लुतयो समावेशः स्यादिति बस्तने । भाष्ये–तस्यासिद्धत्वादिति । कादकालपक्षेऽपि स्वरितस्वप्रनिद्धानात्तस्यान्वि- पाधानप्रवृत्ति । ध्वनित चेदं षष्ठे स्वरितो वानुदात्ते इति सूत्रे च भाष्ये। एकदेश्याह–नैष दोष इति । 'यथा त्यादि भाष्य 'पूर्वत्रे त्वत्र व्याख्यानम् । ननु देवदत्त इत्यादावेकश्रुति दूरात्सुदाविति प्रमङ्गाङ्कय पष्ठिकमानुदात्त स्यन्दन आह–यदा चेति ।

१ दर क्वचित् । २ 'स्वरेष' पा० । ३ 'अन्नो'ति क्वचित् । ४ 'योगपद्येन स पा० ।

## प्रणवष्टे ।८।२।८८।

'प्रणव' इत्युच्यते क प्रणवो नाम॥ पादस्य वाऽर्द्धर्चस्य वाऽन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोङ्कार त्रिमात्रमोकार वा विदधति । 'प्रणवं'[2] इत्याचक्षते ॥ अथ टिग्रहण किमर्थम् ? ॥ ॥*॥ टिग्रहण सर्वादेशार्थम् ॥*॥ [टिग्रहण क्रियते ॥ किं प्रयोजन ? ॥ 'सर्वादेशार्थम्' ]। यदा ओकारस्तदा सर्वादेशो यथा स्यात् । यदा [हि[3]] ॐकारस्तदाऽनेकाल्त्वात्सर्वस्येति सर्वादेशो भविष्यति ॥ [ प्रणवष्टे ]

प्र] प्रणवष्टे । क प्रणव इति । शास्त्रेऽस्मिन्नपरिभाषितत्वात्प्रश्न । पादस्येति । शास्त्रान्तरे प्रसिद्ध आश्रीयते देवतावत् । अक्षरम्–अच् । अन्त्यमच गृहीत्वेत्यर्थ । तदाद्यक्षरशेषस्येति । अक्षर च शेषश्च–हल, अक्षरशेष । तदन्त्यमक्षरमादिर्यस्य तत्तदादि । तदादि च तदक्षरशेष च तदाद्यक्षरशेष–टिसञ्ज्ञकमित्यर्थ ।

अथेति । टिस्थानिन्योरेवोङ्कारौकारयो शास्त्रान्तरे प्रणवसञ्ज्ञाविधानात्प्रश्न । ॐकार इति । असति टिग्रहणेऽलोन्त्यस्येति वचनाट्टेर्योऽन्त्यो हल्तस्यौकार स्यात् । श्रुतत्वेन प्रणवस्य व्यभिचाराऽभावादविशेषणात् । सञ्ज्ञया व विधानेऽप्यपरिभाषोपस्थानात् । अथाऽप्यपरिभाषोपस्थानाद्धिनाऽप्यविशेष्यते तथापि टेर्योऽर्च तस्य स्यान्न तु सर्वस्य टे । ॐकारस्त्वज्झल्समुदायत्वात्तु तो न भवतीति

उ.] अस्या अप्रवृत्ते सिद्धान्तिनाऽनेनात्यस्य स्पष्टमेकदेशयुक्तित्वप्रत्ययेन च न पराक्रान्तमवेति बोध्यम् । [ गुरोरनृतोऽनन्त्यस्यापि ] ॥

ये यज्ञकर्मणि । सिद्धन्त्विति । एवञ्च सूत्र तु कर्तव्यमिति भाव ॥

प्रणवष्टे । यज्ञकर्मणि ऋगादीना टे प्लुत प्रणवोऽनेनादेशो विधीयते । यद्यप्यक्षरशब्देन वर्णमात्र तथा पीहाऽग्निश्रित इत्याह–अक्षरमजिति । तदाद्यक्षरशेषशब्दे बहुव्रीहिगर्भ कर्मधारय इत्याह–अक्षरञ्च शेषश्चेति । अक्षरशेषशब्देन हलुच्यते एव विसर्गादेरप्युपलक्षण । तत्राऽक्षरस्य तदादित्व व्यपदेशिवद्भावेन, शेषस्य तु मुख्य । पादस्यार्धर्चस्य वेति । वाशब्दश्चार्थे । तेन ऋचोऽपि सङ्ग्रहे । ननु टेरित्यनुवर्तमाने पुनष्टिग्रहण किमर्थमत आह–असतीति । ननु प्लुतश्रुत्याऽपरिभाषोपस्थितावन्त्यस्याऽच एवोङ्कार स्यात् इत्यत आह–श्रुतत्वेनेति । प्रणवस्य–ओङ्काररूपस्य । अथार्त्यम्युपगमवाद । उपरञ्जकतया प्लुतेन विशेषणमभवनेऽपरिभाषोपस्थितिरिति भाव ।

1 'त्रिमात्रमोङ्कारमोकार वा' । 'त्रिमात्रम् अकार, त्रिमात्रमोङ्कार' । 2 'प्रणवमिति' ।
3 इद क्वचित् । 4 'टिर्योऽच्' । 5 'अह' ।

याज्याऽन्तः ।८।२।९०।

अन्तग्रहणं किमर्थम् ? ॥ याज्या नामर्चो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते चाऽन्त्यस्य स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमन्तग्रहणम् ॥ [ याज्याऽन्त ] ।

अग्नीत्प्रेषणे परस्य च ।८।२।९२।

॥ * ॥ अग्नीत्प्रेषण इत्यतिप्रसङ्गः ॥ * ॥ अग्नीत्प्रेषणे इत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—अग्नीदग्नीन्विहर । ॥*॥ सिद्धं त्वोश्रावये परस्य चेति वचनात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? [ 'ओश्रावये परस्य चेति वचनात्' ] । ओश्रावये परस्येति वक्तव्यम् । ओ३श्रा३वय ॥ अपर आह—ओश्रावयाश्रावयोरिति वक्तव्यम् । ओ३श्रा३वय । आ३श्रा३वय । ॥*॥ बहुलमन्यत्र ॥ ॥ बहुलमन्यत्रेति[3] वक्तव्यम् । उद्धरा ३ उद्धर । आहरा ३ आहर ॥ तर्हि

प्र ] सर्वस्य टेर्वाक्यस्य टेरित्यविकारात्सिध्यति । कश्चित्तु टिस्थानेऽस्यैवौकारस्य प्रणवसंज्ञाविधानाट्टिग्रहणमनर्थकमिति प्रतिपन्नः । [ प्रणवष्टे ] ।

याज्यान्त । अन्तग्रहणमिति । 'वाक्यस्य टे'रित्यधिकारादन्त्यस्यैव भविष्यतीति प्रश्नः । याज्या नामेति । ऋक्समुदायो याज्या, तत्र प्रत्यृचं प्लुतः प्राप्नोति, ऋक्समुदायस्य योऽन्तस्तस्य प्लुतार्थमन्तग्रहणं । तत्राऽयमर्थो—'याज्यानामन्तो यष्टिस्तस्य योऽन्त्यस्य प्लुत' । [ याज्यान्त ] ।

अग्नीत् । बहुलमिति । वेत्यौश्रावयाश्रावयाभ्यामन्यत्राग्नीत्प्रेषणे बहुलं प्लुतो भवति, बहुलवचनाच्च नादेर्न परस्य, अपि त्वन्त्यस्यैव प्लुतः । उद्धरा ३ उद्धरेति ।

उ ] यद्वा हीत्यादि भाष्यं व्याचष्टे—ओंकारस्त्विति । प्रतिपन्ना इति । एवं हि सूत्रमेव व्यर्थमित्युच्यते । [ प्रणवष्टे ] ॥

याज्यान्त । वाक्यस्य टेरिति । 'टे'रित्यनेन त्वव्यभिचारादन्त्यस्य टेरिति विशेषणमनर्थकं । टिग्रहणनिवृत्तौ त्वजन्ताया एव याज्यायाः स्यादिति तात्पर्यम् । ऋक्समुदाय इति । याज्यान्तः वाक्यस्य टेरित्यर्थो ह्यन्तग्रहणाऽभावे स्यादिति भावः । ऋचो वाक्यसमुदाय इति भाष्ये । ऋक्समुदायरूपो वाक्यसमुदाय इत्यर्थः । [ याज्यान्त ] ॥

अग्नीत्प्रे । अग्नीध ऋत्विग्विशेषस्य प्रेषण इति कर्मषष्ठ्या समासः । 'अग्नीत्कर्मण्यध्वर्युकर्तृके प्रेषणे आदेः प्लुतो भवति, तत्र परस्य द्वितीयाऽचश्च' इति सूत्रार्थः । भाष्ये—ओश्रावयेपरस्येति । परस्य चाऽऽदेश्चेत्यर्थः । अपि त्वन्त्यस्यैवेति । उद्धर उद्धरेत्यादौ

१ 'मन्यत्रेति' 'परस्येति' पा० । २ इदं वार्त्तिकम् । ३ 'मन्यत्रापि' क्वापीति पा० । ४ 'टा ।

वक्तव्यं ? ॥ न वक्तव्यम् । योगविभागः करिष्यते–'अभ्याक्षेपणे परस्य च विभाषा' । ततः 'पृष्टप्रतिवचने हेः' । 'विभाषे'त्येव । अपर आह–॥ * ॥ सर्व एव प्लुतः साहसमनिच्छता विभाषा वक्तव्यः ॥ * ॥ [ अभ्याक्षेपणे ] ॥

## आम्रेडितं भर्त्सने ।८।२।९५।

॥ * ॥ भर्त्सने पर्यायेण ॥ * ॥ भर्त्सने पर्यायेणेति वक्तव्यम् । चौरा३ चौर । चौर चौरा३ । कुशीला३ कुशील । कुशील कुशीला३ ॥

## स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ।८।२।१०३।

॥ * ॥ असूयादिषु वावचनम् ॥ * ॥ असूयादिषु वेति वक्तव्यम् । कन्ये३ कन्ये । कन्ये कन्ये । शक्तिके३ शक्तिके । शक्तिके शक्तिके ॥

## प्लुतावैच इदुतौ ।८।२।१०६।

किमर्थमिदमुच्यते ? ॥ * ॥ ऐचोरुभयविवृद्ध्यर्थमसङ्ख्यादिदुतोः प्लुतवचनम् ॥ * ॥

---

प्र.] चापले द्विर्वचनम् । योगविभाग इति । व्यवस्थितविभाषा चाश्रीयते इति भावः । एवमुदाहरणे उदाहरेत्यन्यत्र प्लुतो न लभ्यत इति केचिदाहुः । व्यवहितेऽपि परशब्दो वर्तत इति भाष्यकाराभिप्रायमन्य आहुः । साहसमिति । शास्त्रयोग साहसं । तेन शास्त्रमन्यन्ताऽभियुक्तस्मरणात्सर्वं प्लुतो विभाषा विधेय इत्यर्थः । एतच्च प्राग्ग्रहणस्य सर्वत्र सम्बन्धात्सिध्यतीति मन्यन्ते । [अभ्याक्षेपणे] ।

स्वरित । असूयादिष्विति । 'सर्व एव प्लुत'इति वचनमन्यदीयमिति वचनम् । [ स्वरितमाम्रेडिते ] ॥

प्लुतावैच । लक्षणान्तरेणैव प्लुतप्रसङ्गे तदवयवयोरिदुतोः प्लुतार्थं वचनम् ।

उ.] पूर्वान्त्यस्येत्यर्थः । प्लुतग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादिति भावः । अन्त्यस्य प्लुतो नेति । पूर्वान्त्यस्येत्यथ । विभाषाग्रहणस्य विकल्पार्थत्वेनोपाधिव्यभिचारार्थत्वाऽभावादिति भावः । व्यवहितेऽपीति । व्यवस्थितविभाषाश्रयणादेव नाव्यवहितपरस्य । क्वचित्तु तस्यैवेति भावः । अविमृश्यकारित्वं–साहसं । तदिदं शब्दप्रयोगे शास्त्राननुसरणं । तदाह–शास्त्रयोग इति । प्राग्ग्रहणस्येति । क्वचित्तु विभाषेति अत्र योगं विभज्य 'उक्तं वक्ष्यमाणं च प्लुतसंज्ञं वा'–इत्याहुः । [ अभ्याक्षेपणे परस्य च ]॥

प्लुतावैच । नेदं प्लुतविधायकं किन्तु अन्यशास्त्रविहितप्लुतस्य विषयशोधकमित्याह–

---

१ 'सर्वत्र' पा० । अभ्यधिकमित्यन्ये । २ 'चौर ३' पा० । ३ 'कुशील ३' पा० । ४ 'कन्ये कन्ये ३' पा० । ५ 'शक्तिके शक्तिके ३' पा० । ६ इद क्वचिन्न । 'वृद्धि' पा० । ७ 'एवमुदाहरणेऽपरस्य प्लुतो' पा० । ८ नुनेयस्यादे परस्यास्याभावादित्यर्थः । ९ 'शास्त्र'मित्यन्य ।

ऽयथेष्टप्रसङ्ग ॥ * ॥ तत्राऽयथेष्ट प्रसज्येत । चतुर्मात्र प्लुत प्राप्नोति ॥ ॥ * ॥ सिद्ध त्विदुतोर्दीर्घवचनात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ ['इदुतोर्दीर्घवचनात्']॥ इदुतोर्दीर्घो भवतीति वक्तव्यम् ॥ तदेतत्कथ कृत्वा सिद्ध भवति ? ॥ यदि सम प्रविभागो–मात्राऽवर्णस्य मात्रेवर्णोवर्णयो ॥

अथ ह्यर्द्धमात्राऽवर्णस्याऽध्यर्द्धमात्रेवर्णोवर्णयोरर्द्धतृतीयमात्रे[1] प्राप्नोति । अथ हि[2] ह्यध्यर्द्धमात्राऽवर्णस्याऽध्यर्द्धमात्रे[3]वर्णोवर्णयोरर्द्धचतुर्थमात्र प्राप्नोति। सूत्र च भिद्यते ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्त–'तत्रायथेष्टप्रसङ्ग' इति ॥ तत्र सौर्यभागवतोक्तमनिष्टिज्ञो वाडव पठति । इष्यत एव चतुर्मात्र प्लुत । [ प्लुतावैच इदुतौ ] ॥

## एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ ।८।२।१०७।

॥ * ॥ एच प्लुतविकारे पदान्तग्रहणम् ॥ * ॥ एच प्लुतविकारे

प्र ]पूर्वमूर्तिविनाशे मूर्त्यन्तरोत्पत्ति ,एव शब्दान्तरमेवोभयविवृद्धि प्राप्नोतीत्युच्यत। चतुर्मात्र इति । प्लुतावयवत्वात् प्लुत उच्यते, नहि चतुर्मात्रस्य प्लुतसंज्ञाऽस्ति 'ऊकालोऽ'ज्झिति वचनात् । तदेतदिति । भाष्यकारो वार्तिककार पर्यनुयुङ्क्ते । 'ऐचोश्चोत्तरभूयस्त्वा'दिति वदता वार्तिककारेण समप्रविभागत्व नेष्टमिति भाव । इष्यत एवेति । 'ऊकाल एवाऽज्झि'ति नियमो नाश्रीयते, तेन चतुर्मात्र स्याप्यच्कार्य भवति, 'अन्यङ्क्षतिकायने'ति 'ङमो ह्रस्वा'दिति ङमुड्भवति । 'शलो ४झाते' त्यनाऽनाचि चेति तकारस्य द्विर्वचन भवति । सौर्यभागवतेति । सौर्य नाम नगर तत्रत्येनाचार्येणेदमुक्तम् । [ प्लुतावैच इदुतौ ] ।

उ.]अवस्थिता एव वर्धन्त इति नेत्यन्वय । प्लुतावयवत्वादिति। प्लुतशब्दस्यावयवत्वादि त्यर्थ । त्रिमात्रत्वेन च साहश्य । प्लुतो गौणवृत्त्याश्रयणमत आह–नहीति । नाप्यवयवस्य मुख्य प्लुतत्वम्, अच्त्वाऽभावादित्यपि बोध्यम् । इति वदतेति । एवञ्च वार्तिककारस्य पूर्वोऽपरविरोध इत्यर्थ । नत्रोत्तरस्य भूयस्त्व पूर्वस्य वेत्यत्र विनिगमनाविरहस्य भाष्यकृतोक्ततया समप्रविभागपक्ष एव भगवतो भाष्यकारस्य सम्मत इति बोध्यम् । ननु एक मात्रिक द्विमात्रिकत्रिमात्रिकाणामेवाऽच्त्वात् कथ चतुर्मात्रिकस्याऽच्कार्याणि स्युरत आह–ऊकाल एवेति । तत्र त्रिमात्रग्रहण एव द्विमात्रभिन्नोपलक्षणमिति भाव । शलो ४-झातेति समस्त । सिद्ध त्विदुतो रिति वार्तिक वाडवस्य,तदाह–वाडव पठतीति। [प्लुतावैच इदुतौ] ॥

1 'मात्रा' पा० । २ 'अद' पा० । 'मात्रे नि पा० । ३ 'अर्द्धमात्रा' पा० । ४ 'गित्व' पा० ।

पदान्तग्रहणं कर्तव्यम् । इह मा भूत्-भद्र करोषि गौ३रिति ॥ * ॥ विषय-परिगणनं च ॥ * ॥ विषयपरिगणनं च कर्तव्यम् । 'प्रश्नान्ताभिपूजित विचार्यमाणप्रत्यभिवादयाज्यान्तेष्वि'ति वक्तव्यम् । प्रश्नान्त–अगमा३ः पूर्वा३न्[3] ग्रामा३न्नग्निभूता३ इ ?। पटा३उ ?। प्रश्नान्त ॥ अभिपूजित–भिद्रोऽसि माणवकाऽग्निभूता३इ । पटा३उ । अभिपूजित ॥ विचार्यमाण–होतव्य दीक्षितस्य गृहा३इ । विचार्यमाण ॥ प्रत्यभिवाद–आयुष्मानेधि अग्निभूता३इ । प्रत्यभिवाद ॥ याज्यान्त–उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे स्तोमैर्विधेमाग्नया३इ[4] ॥ * ॥ आमन्त्रिते छन्दस्युपसङ्ख्यानम् ॥ * ॥ आमन्त्रिते छन्दस्युपसङ्ख्यानं कर्तव्यम् । अग्ना३इ पत्नीवा३ः[5] सजूर्देवेन त्वष्ट्रा सोमं पिब ॥ [ एचोऽप्रगृह्यस्यादूरा ]

तयोर्य्वावचि संहितायाम् ।८।२।१०८।

अथ कयोरिमौ य्वा[6]वुच्येते ?॥ 'इदुतो'रित्याह ॥ तदिदुतोर्ग्रहणं कर्तव्यम् ॥

---

एचोऽप्र । गौ३रिति । अथ यदा भादपि पदं भवति तदा कस्मान्न भवति[1], उच्यते तद्वाक्यपदयोरन्त्यस्येति । विमर्शनीयश्चात्र वाक्यस्यान्तो न स्वैच । पदान्तग्रहणमित्यत्र पदशब्देन वाक्यमुच्यते, पद्यते प्रतीयतेऽनेनार्थ इति पदमित्यन्वयग्रहणात् । एतच्च 'याज्यान्त' इत्यतोऽन्तग्रहणानुवृत्त्या लभ्यते ।

अग्निभूता३इयिति । अग्निभूतिशब्दस्य सम्बुद्धौ रूपम् । आमन्त्रित इति । अप्राप्त एव प्लुते वचनम् । [ एचोऽप्रगृह्यस्यानुनासिक ]।

उ ] ऐचोऽप्रगृह्यस्य । अथ यदेति । यत 'कर्मवनामस्यन्ते' इति यन्दो सर्वत्र सम्धाने प्रतिपद इति व्याख्यानं तन्त्र्यर्थं । न च परिगणनेऽन्यादूर इति व्यर्थं स्यात् । किञ्च तस्मिन् तस्य दूरादूत इति पदस्य सम्बोधनोपलक्षणत्वेन सम्बोधनेऽपहरणस्य फलमिति वाच्यम्, उपलक्षणत्वे मानाभावात् । किन्तु यथाश्रुतमेव तत् । एवञ्च दूराद्धाऽनविहिताऽभिपूजितार्थे 'स्वागच्छ भो माण कर्णग्निभूते' इत्यादौ नास्य प्रवृत्तिरित्याहु । वृत्तिकारास्तु परिगणनेऽदूरादूत इति न वक्तव्य । तस्य सन्धेयनामलक्षणत्वेन सन्ध्येयदृष्टत्वात् भाष्योदाहरणविरोधाच्चेत्याहुः । तच्चिन्त्यम् । अप्राप्त एव प्लुत इति । प्लुतविकारे इत्यर्थं । दूराद्धूतमत्वा परिगणनाच्चाप्राप्ति । प्लुतस्तु 'गुरोरनृत' इति प्रयोगेन्नैव । तेन वाक्यान्तपदानन्तर्यस्यैव प्लुत इत्यत्र न भान । कश्चित्तु 'गुरोरि'ति सूत्रं दूराद्धूत इत्यादि विहितप्लुतस्य स्थानिविशेषमात्रमनर्थक नतु विधायकमिति दधाऽन्यदेव व्याचक्षते ।

---

1 'गौरिति' पा० । 2 'अगम ३:' पा० । 3 'पूर्वान्ग्रामान्' पा० । 4 'कर्मणेधा३इ' पा० । 5 'पत्नीव' । 'पत्नीवा' 'पत्नीव ३:' पा० । 6 'वियुच्येते' पा० ।

न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'पूर्वस्यार्द्धस्यादुत्तरस्येदुता'विति ॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥ 'अची'त्येषा सप्तमी'दुता'विति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति ॥

किमर्थमिदमुच्यते नेको यणचीत्येव सिद्धम् ? ॥ न सिध्यति । असिद्धः प्लुतः, प्लुतविकारौ चेमौ । सिद्धः प्लुतः स्वरसन्धिषु ॥ कथं ज्ञायते ? ॥ यदयं 'प्लुतप्रगृह्या अची'ति प्लुतस्य प्रकृतिभावं शास्ति ॥ कथं[2] कृत्वा ज्ञापकः ? ॥ सतो हि कार्यिणः कार्येण भवितव्यम् ॥ इदं तर्हि—

॥*॥ प्रयोजनं—दीर्घशाकल्यप्रतिषेधार्थम् ॥*॥ [ दीर्घशाकल्यप्रतिषेधार्थं प्रयोजनम् ] ॥ दीर्घत्वं[3] शाकल्यं च मा भूदिति[4] । अग्ना३इयिन्द्रम् । पटा३उदकम् ॥ एतदपि नास्ति प्रयोजनम् । आरभ्यते[5] प्लुतपूर्वस्य 'यणादेशः प्लुतपूर्वस्य (च) दीर्घशाकल्यप्रतिषेधार्थ'मिति, तच्च वक्तव्यं भवति ॥ अवश्यं तद्वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं—ओ३यिन्द्र[6] ओ३यिदेति ॥ यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यमिदं न वक्तव्यम् ॥ इदम[प्ये][7]वश्यं वक्तव्यं

प्र. ] तयोः । कयोरिति । प्रश्नद्वारेण 'तयो'रिति प्रत्याख्यायते, तदन्तरेणाप्यधिकारात्स्यानिलाभात् । प्लुतविकाराविति । प्लुतविषयत्वात्प्लुतविकारावुच्येते तौ चाऽसिद्धकाण्डे पाठाद्यणादेशे कर्तव्येऽसिद्धौ । सिद्धः प्लुत इति । ननु प्लुतस्य सिद्धत्वे कथमिदुतोः सिद्धत्वम् ? । उच्यते । प्लुतप्रकरणे यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्यविषयानुमानाश्रयणात् । ओ३यिन्द्रेति । इत्यादस्य निपातत्वात्प्रगृह्यत्वात्प्रकृतिभावप्रसङ्गे तद्बाधनार्थोऽपि यण्विधिः । वर्णव्यत्यये

उ ] तयोर्य्वा । ननु तयोरित्यनेनेदुतो स्थानिनोर्निर्देशात्कयोरिति प्रश्नोऽनुपपन्न इत्याशङ्क्याशयमाह—कयोरितीति । भाष्ये तदिदुतोर्ग्रहणं कर्तव्यमिति । तदेव तयोरिति कर्तव्यमित्यर्थ । नन्वत्र उत्तरार्धविकारावितुनौ न प्लुतस्येति प्लुतविकारावित्ययुक्तमत आह—विषयत्वादिति । प्लुतसहितौ विकाराविति मध्यमपदलोपी समासः । आकारस्य प्लुतस्य विधानात्तत्सन्नियोगशिष्टतयाऽनयोरपि तद्विषयत्वमिति भावः । कथमिदुतोरिति । तयोः प्लुतत्वाऽभावादिति भावः । भाष्ये—दीर्घं च शाकल्यश्चेति । दीर्घं सवर्णदीर्घं । शाकल्योदाहरणम्—अग्नाइयादीनि । सामर्थ्यादसिद्धावपि दीर्घशाकल्ययोः—अग्नावादावित्यर्थः ।

१ निर्देशात्' पा० । २ इदं प्रादिकम् । ३ दीर्घेत्यादि वार्तिकमित्यन्ये । इदं भाष्यं न वार्तिकमित्यन्ये । ४ इदं प्लुत भवतीति नास्ति । ५ दीर्घ ६ इति क्वचित् । ७ 'म्यतेऽत्र पा० ८ 'ओ ३ इ इन्द्र ओ३दिन्द्र' 'ओ ३ यह ओ ३ इहेति पा० ।

स्वरार्थम् । तेन हि सति 'उदात्तस्वरितयोर्यण स्वरितोऽनुदात्तस्ये'त्येप स्वर प्रसज्येत, अनेन पुन सत्यसिद्धत्वान्न भविष्यति ॥ यदि तर्ह्यस्य निव न्धनमस्तीदमेव वक्तव्य तन्न वक्तव्यम् ॥ ननु चोक्त 'तदप्यवश्य वक्तव्य, यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं—ओ३ इ इन्द्र । ओ३यिंद्रेति ॥ छान्दसमेतत्,दृष्टानुविधिश्छन्दसि भवति ॥ यत्तर्हि न छान्दस ओ३इन्द्र [ ओ ३ यिन्द्र ] साम गायति ? ॥ एषोऽपि छन्दसि दृष्टस्यानुप्रयोग इति ॥

॥ * ॥ किं[3] तु[4] यणा भवतीह न सिद्ध य्वाविदुतोर्यदय विदधाति ।
तौ च मम स्वरसन्धिपु सिद्धौ शाकल्दीर्घविधी तु निवर्त्त्यौ ॥१॥

प्र.] नाऽत्र छान्दस प्लुत । स्वरार्थमिति। आकारो यथाविषयमुदात्तादियुक्त प्लुत, इदुतौ तु सर्वत्रोदात्तौ, तत्राऽनयोर्य्वौरुदात्तस्वरितयोरिति स्वरिते कर्तव्येऽसिद्ध त्वात्स्वरितो न भवति । प्लुतप्रकरणे विहित च कार्यं स्वरसन्धिषु सिद्धमिति ज्ञापित, स्वरस्तु स्वरसन्धिर्न भवतीति तत्राऽसिद्धत्व य्वोर्भवत्येव । छान्द समेतदिति । ततश्चोपसङ्ख्यानमन्तरेण वर्णव्यत्ययेन यण्सिद्ध । यत्तर्हीति । अप्रतिपन्नविकारस्याऽनुकरणत्वादच्छान्दसत्वाद्यण्न प्राप्नोति। एषोऽपीति । इह यणादेशस्यैवेदमनुकरणमित्यर्थ । पूर्वोक्तार्थसङ्ग्रहश्लोकद्वयम्-किं न यणेति । 'इको यणचि' ति यणादेशेन किं न सिद्ध रूप यत इदुतोर्य्वौ विदधात्याचार्यस्तौ चेदुतौ स्वरसन्धिषु सिद्धौ, प्लुतप्रगृह्या अचीति ज्ञापकात्। एव तर्हि इकोऽसवर्णे इति शाकल्य प्रकृतिभाव प्राप्नोति, सवर्णदीर्घश्च, तन्निवृत्त्यर्थं य्वौ विधीयेते । एतदपि न प्रयोजनम्, इक प्लुतपूर्वस्य वार्तिककारेण शाकल्दीर्घस्यापवादस्य यणो विधानात् । एव तर्ह्युदात्तस्वरितयोरिति यणाश्रयस्वरितप्रसङ्गनिवृत्तये य्वौ विधी

उ ] छान्दस प्लुत इति । अनन्त्यत्वात् । गुरोरनृत इति सूत्रस्य एकैकग्रहणेनानेकाच्च एव प्रवृत्तिरिति भाव । यथाविषयमिति । विचार्यमाणादिषूदात्त, प्रश्नान्तादावनुदात्त अन् ध्यादौ स्वरित इत्यर्थ । इदुतौ त्विति । अनुवृत्तोदात्तपदेन तयो सर्वत्रादित्यर्थ । तत्रा नयोरिति । उदात्तेदुत्स्थानिकयवयोरित्यर्थ । ननु प्लुतप्रकरणस्य कार्यस्य सिद्धत्व ज्ञापनात्कथ न स्वरोऽत आह—प्लुतप्रकरण इति । वर्णव्यत्ययेनेति । प्लुतवदिति भाव । तदेवमुपसङ्ख्यान प्रत्याख्यान सूत्र तु स्वरसिद्ध्यर्थं कर्तव्यमिति स्थितम् । अनुकरणमिति । भाष्येऽनुप्रयोगशब्दस्यानुकरणमर्थ इति भाव । किं न सिद्ध मिति । सिद्धमेवेत्यर्थ । श्लोके यच्छब्दो निपातो हेतावित्याह—यत इति । नन्वनयोरि

1 'ओ३यिंद्र' ह्रो३ यि इद्र । २ 'योक्त' । ३ श्लोकवार्तिकद्वयम् । ४ 'न' 'नु' पा० ।

इकु यदा भवति श्रुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतु ॥२॥ *

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च द्वितीय. ॥

## मतुवसो रु संबुद्धौ छन्दसि ।८।३।१।

॥ * ॥ मतुवसोरादेशे वन उपसङ्ख्यानम् ॥ * ॥ मतुवसोरादेशे वन उपसङ्ख्यान कर्तव्यम् । यस्त्वायन्तं वसुना प्रातरित्व. । ॥ * ॥ विभाषा भवद्भगवदघवतामोच्चाऽवस्य ॥*॥ छन्दसि भाषायाञ्च भवत्' 'भगवत्' 'अघव'दित्येतेषा विभाषा रुर्वक्तव्यः, ओच्चाऽवस्य वक्तव्य । भो. । भवन् । भगोः । भगवन् । अघो. । अघवन्निति ॥ सबुद्धाविन्युच्यते तत्रेद न सिध्यति—भो ब्राह्मणा इति । तथा विभक्तौ लिङ्गविशिष्टग्रहण नेती'ह न प्राप्नोति भो ब्राह्मणि ! ॥ नैष दोष. । अव्ययमेष भो शब्दो नैषा भवतः प्रकृति ॥

प्र.] येते । इति भाष्यप्रदीपेऽष्टमस्य द्वितीयपादे द्वितीयमाह्निकम् ॥ पादश्च समाप्त ॥

मतुवसो । वन इति । क्वनिब्वनिपो सामान्यग्रहणम् ,अनुबन्धस्याऽनिर्देशात् , तदनुबन्धकपरिभाषानुपस्थानात्क्वनिपोऽपि ग्रहणम् । प्रातरित्व इति । प्रातरेतीति । 'अन्येभ्योऽपि दृश्यन्त' इति क्वनिप् । भो ब्राह्मणा इति । जसि रुत्वौत्वे न प्राप्नुतो, नापि रुर्वान्वयोर्भो इति रूप सिध्यति । तथा 'भो ब्राह्मणी'त्यत्रापि भवतिशब्देकारस्य रुत्वे, अवस्य चौत्वेऽपि कृते, संयोगान्तलोपे कर्तव्ये रुत्वस्या-

उ.] कुतोरसिद्धत्वात्कथ तयोरिको यणचीति यणत आह–तौ चेति ॥ इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्द्योतेऽष्टमस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ पादश्च द्वितीयः समाप्त ॥

मतुवसो रु० । 'वन' इत्युक्त्वा प्रातरित्वेति क्वनिुदाहरणमसङ्गतमत आह–सामान्यग्रहणमिति । तदनुबन्धकग्रहण इत्यत्रैकानुबन्धोच्चारणे इत्यर्थ इति भाव । भाष्ये–ओच्चावस्येति । 'नानर्थके' इति परिभाषया विशिष्टस्य स्थानित्व उच्चारणाद्यौकार मवदित । जसीति । सूत्रस्थसंबुद्धावित्यस्य वार्तिकेऽपि सम्बन्धात् । नापीति । असत्त्वप्रसङ्गात् । लिङ्गविशिष्टपरिभाषाऽभ्युपगमेऽपि रूपाऽसिद्धिरित्याह–तथेति । संयोगान्तलोपेऽपि भोदिति स्यादिति रूपाऽसिद्धि", यण. प्रतिषेधारम्भाञ्च स दुर्लभ इत्यपि बोध्यम् ।

भाष्ये–नैषा भवत प्रकृतिरिति । एषा–प्रकृति । अव्यये सुप उत्पत्तेरस्य प्रकृतित्व व्यवहार । सा च न भवत –न भवच्छब्दजन्येत्यर्थ । प्रकृतिरिति पाठे प्रयोग इत्यर्थ ।

१ 'किन्तु' पा० । २ अय पाठ , क्वचित् । ३ 'विशिष्टस्य' पा० । ४ 'प्रकृति'' पा० ।

सकार । 'पुम खय्यम्पर'इति निवृत्तम् ।॥ ॥ समो वा लोपमेके ॥ * ॥ समो वा लोपमेक इच्छन्ति ॥ सस्कर्ता । सँस्कर्ता ॥ [ सम० सुटि ] ॥

## ढो ढे लोप ।८।३।१३।

॥ * ॥ ढलोपेऽपदान्तग्रहणम् ॥ * ॥ ढलोपेऽपदान्तग्रहण कर्तव्यम् । इह मा भूत् श्वलिड्ढौकते गुडलिड्ढौकते ॥ तर्हि वक्तव्य ? ॥ न वक्तव्य। जश्त्वमत्र बाधक भविष्यति ॥*॥ जश्भावादिति चेदुत्तरत्र टस्याऽभावादप-वादप्रसङ्ग ॥*॥ जश्भावादिति चेदुत्तरत्र ढकारस्याऽभावादसिद्धत्वादपवादोऽय विज्ञायेत ॥ कस्य ? ॥ जश्त्वस्य ॥ * ॥ तस्मात्सिद्धवचनम् ॥ * ॥ तस्मात्सिद्धत्व वक्तव्यम् ॥ कस्य ? ॥ ष्टुत्वस्य ॥ * ॥ सङ्ग्रहण वा ॥ * ॥

---

प्र ] सम्बन्ध न हास्यतीत्यर्थ । अनुपूर्वस्य वृत्ते सकर्मत्वात्सम्बन्धमिति द्वितीया । कर्मणि वा घञ् । स च नपुसकेऽपि बाधकाऽभावाद्भवति । क्रिया तु क्रियादिभिर्बाध्यमानत्वान्न भवति । [ सम० सुटि ] ॥

ढो ढे । ढलोप इति । क्वचित्स्थानी नास्ति, क्व चिन्निमित्त नास्तीति वचनसामर्थ्याद्वचनान्तरबाधनादुभय नलोपप्रसङ्ग । जश्त्वमत्रेति । एकपदाश्रयत्वादन्तरङ्गत्वात् पूर्वत्राऽसिद्ध'मिति वा लोपस्याऽसिद्धत्वात्पूर्वं जश्त्वे प्रवृत्ते लोपस्याऽप्राप्तिरेव बाधा । जश्भावादिति चेदिति । उत्तरत्र ढे [यो] लोप इष्यते स न प्राप्नोति, लोपे कर्तव्ये ष्टुत्वस्याऽसिद्धत्वात्परस्य टत्वाऽभावादित्यर्थः । जश्त्व इति । लोपेन तावदतिव्याप्तिरवश्य बाध्य, तत्र 'लाट'मित्यादावेकनेव पूर्व

---

उ ] माह-भयोस्तरतीति । सकर्मकत्वादिति । अहीनार्थत्वादिति भाव । कर्मणि वा घञिति । [illegible] सं इति [illegible] इत्यर्थं । नपुसकेऽपीति । घञन्ता पुंसि' इति प्राप्ते बाध इति भाव । [ सम० सुटि ] ॥

ढो ढे लोप । क्वचित्स्थानीति । [illegible] । क्वचिन्निमित्त मिति । 'लीढ'मित्यादौ ष्टुत्वस्याऽसिद्धत्वा'दिति भाव । वचनान्तरबाधनादिति । [illegible] पूर्वत्राऽसिद्धमित्यस्य [illegible] प्रवृत्तेऽपि [illegible] इति भाव । ननु लोपस्याऽसिद्धत्वाच्च [illegible] लोपस्य [illegible] आह–अप्राप्तिरेव बाधेति । [illegible][3] [illegible] । कस्य जश्त्वस्येति । लीढ इत्यादावप्युत्ते [illegible] इत्यर्थं । तस्मादिति । ष्टुत्वस्य [illegible] पूर्वं [illegible] प्रवृत्ते लोपप्राप्तिरिति भाव । सङ्ग्रहण वेति । [illegible] इत्यादावप्युदाहरणेन विकल्प

---

१ [illegible] । २ [illegible] । ३ [illegible] ।

सङ्ग्रहणं वा कर्तव्यम्। 'षढि ढ' इति वक्तव्यम्॥ तत्तर्हि वक्तव्य ?॥ न वक्तव्यम्। आनन्तर्यमिहाश्रीयते 'ढकारस्य ढकार' इति॥ क्वचित्संनिपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं, क्वचिच्च नैव संनिपातकृतं नापि शास्त्रकृतम्। ष्टुत्वे संनिपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं, जश्त्वे नैव संनिपातकृतं, नापि शास्त्रकृतम्। यत्तु कृतश्चिदेवानन्तर्यं तदाश्रयिष्याम।

## खरवसानयोर्विसर्जनीय ।८।३।१५।

॥ * ॥ विसर्जनीयोऽनुत्तरपदे ॥ * ॥ विसर्जनीयोऽनुत्तरपद इति वक्तव्यम्। इह मा भूत् मार्कुण्टो नार्पत्य इति॥ [तत्तर्हि वक्तव्य विसर्जना

प्र] त्रासिद्धत्वमतस्तदेव बाध्यते, श्वलिड्ढौकत इत्यत्र तु टलोपस्य जश्त्वापेक्षया बहिरङ्गत्वात्परत्वाच्च द्विविधमसिद्धत्वमिति न तद्बाध्यते। ततो जश्त्वे कृते नश्रुतिकृतमानन्तर्यं नापि शास्त्रकृतं जश्त्वस्याऽसिद्धत्वाऽभावादिति लोपस्याऽयमविषय। [ढो ढे लोप]॥

खरव। विसर्जनीय इति। उत्तरपदे सति यो रेफो निष्पन्नस्तन्निमित्तक स्तस्य विसर्जनीयो न भवतीति वाक्यार्थं सम्पद्यते। तेन दास्या पुनादौ भवत्येव। न ह्यत्र सकारस्य रेफ उत्तरपदनिमित्तक, किं तर्हि पदत्वनिमित्तक। 'नार्कुट' इत्यादौ तु तद्धितनिमित्तत्वे रेफस्योत्तरपद निमित्त, तदपेक्षत्वादकारस्यादित्वस्य। नार्कुट इति। नृकुट्या भव इत्यण। नार्पत्य इति। नृपतेरपत्यमिति दित्यदित्येति ण्य। तत्र वृद्धौ कृताया रपरत्वे च पूर्वभक्तत्वाद्रेफस्य

उ] बोध्यो वाध्यत्व। ननु सामर्थ्यात् ष्टुत्वाऽसिद्धत्वबाधे श्चुत्वासिद्धत्वमपि बाध्यतां विनिगमकाऽभावादत आह-द्विविधमिति। किञ्च स्वैकवाक्यतापन्नपूर्वशास्त्रसिद्धबाधापेक्षया पश्चादुपस्थितपराङ्गतद्बाधायैव न्याय्यत्वमित्यपि बोध्यम्। एतेन त्रिपाद्यामप्यन्तरङ्गे बहिरङ्गाऽसिद्धत्वाऽप्रवृत्तिरिदं चिन्त्यमित्यपास्तम्। अत एव ष्टुत्वं श्चोत्वेऽप्यसीति न्यास खरिचेत्यत्र पूर्वं न कृत। [ढो ढे लोप]॥

खरवसानयोर्विसर्जनीय। नन्वेव मध्वसमूह इत्यादौ उत्तरपदे विसर्गेण स्यान्त आह उत्तरपदे सतीति। नेयं परसप्तमी विधयविशेषणं किन्तु सत्सप्तमी रेफविशेषण। तेन निमित्तत्वं फलतीत्याह-तन्निमित्तक इति। ननु नार्कुटेऽपि नोत्तरपदनिमित्तको रेफ इत्यत आह-नार्कुट इत्यादौ त्विति। ऋकारस्थानाऽऽदित्वस्य वृद्धिनिमित्तस्य तदपेक्षत्वादित्यन्वय। पूर्वभक्तत्वादिति। रपरोऽण यद्यप्युत्तरस्थानिकस्तथा

१ 'मानन्तर्यं पा०। २ मानन्तर्य पा।

चाऽनेभिनिर्वृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति, तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य भवति[2]। [ ॥ * ॥ अनिमित्तं बहिरङ्गमन्तरङ्गस्याऽसिद्धत्वात् ॥ * ] ॥ [3]अनिमित्तं बहिरङ्गमन्तरङ्गस्य ॥ किं कारणम्?॥ 'असिद्धत्वात्' ॥ कथमसिद्धत्वं यावता 'पूर्वत्राऽसिद्ध'मित्यसिद्धा परिभाषा। असिद्धं बहिरङ्गमन्तरङ्गे' ॥ कथम्?॥ 'कार्यकालं संज्ञापरिभाष'मिति। 'खरवसानयोर्विसर्जनीय'। उप

---

प्र ] तदपेक्षबहिरङ्गत्वाऽभावाद्बहिरङ्गपरिभाषानुपस्थानात्प्राप्नोत्येव विसर्जनीय। नानभिनिर्वृत्त इति। वस्तुतत्त्वकथनम्। तत्र निमित्तमेवेति। पराभ्युपगमेनाऽन्तरङ्गबहिरङ्गव्यपदेशः। बहिरङ्गाभिमतं बहिरङ्गम्। अन्तरङ्गाभिमतस्यान्तरङ्गस्येत्यर्थः। असिद्धत्वादिति। बहिरङ्गस्य रेफस्याऽन्तरङ्गे विसर्जनीयेऽसिद्धत्वाद्विसर्जनीयाऽभावः। कथमसिद्धत्वं यावता पूर्वत्रासिद्धमित्यसिद्धा परिभाषेति। 'पूर्वत्राऽसिद्ध'मिति वचनेन विसर्जनीयस्य पूर्वस्याः परिभाषाया-मसिद्धत्वात्तदनुपस्थानात्कथं रेफस्याऽसिद्धत्वमित्यर्थः। अप्रवृत्तिरेव परिभाषाया असिद्धिः। बहिरङ्गपरिभाषा हि 'विप्रतिषेधे परं कार्य'मित्यनेनोपसंख्या-नान्तेनापि 'वाह ऊ'डित्यत्र ज्ञापितत्वादेतद्देशा वेति पूर्वा। इतरः कार्यकाल-माश्रित्याह-असिद्धमिति। यथोद्देशत्वमाश्रित्य चोदयति-कथमिति। इतर आह-कार्यकालमिति। तत्र काचित्परिभाषा विधिवाक्येनैकवाक्यतां गता स्वकार्यं निष्पादयति, यथेत्परिभाषा मिदेरिको गुणं व्यवस्थापयति। काचित्

उ.] न्तरङ्गस्य तदपेक्षबहिरङ्गत्वाऽभावात्सिद्धत्वेनैव बहिरङ्गत्वेनैव तस्य नान्तरीयार्थं। पूर्वत्रासिद्धमिति। विसर्गस्याऽसिद्धत्वं न तु रेफस्य यथा 'विसर्गस्यासिद्ध'-दाह-भाष्ये-न चानभिनिर्वृत्ते इति। तत्र निमित्तमेव बहिरङ्गमित्याद्येव वक्तव्ये अन्य प्रकृते उपयोगाभावादाह-वस्तुतत्त्वेति। पराभ्युपगमेनेति। एवं च बहिरङ्गत्वाऽभावेन परिभाषाऽप्रवृत्तौ प्राप्नोत्येव विसर्ग इति बोध्यमिति भावः। अत्राशयमजानन् पृच्छति-अनिमित्त-मिति। तथा चेष्टे-बहिरङ्गस्येति। इतरः स्वाशयं प्रकटयति-कथमित्यादि। न च परिभाषे'त्यस्य प्रकृतत्वे एको ग्रन्थ इत्याशयेन कुत्र भाष्यमुदाहृत्य-कथमित्यादि। कथमित्याक्षेपेणैवानेनासिद्धत्वं प्राप्नोतीत्यर्थः। तदुपपादयति-पूर्वत्रेति। असिद्धा परि-भाषेत्यस्याप्रवृत्तत्वादङ्गपरिभाषेत्यर्थः। इत्याह-अप्रवृत्तिरेवेति। कार्यकालत्वमिति। तत्पक्षे हि विसर्जनीयस्याऽसिद्धत्वेऽपि परिभाषायाः सिद्धत्वात्तेन तस्याः स्वैकवाक्यता-सम्पादनमिति भावः। तत्र परिभाषाणां विधिष्वेकवाक्यता क्वचित्पदैकवाक्यतया, क्वचिद्वाक्यैक-वाक्यतयेति दर्शयति— तत्र काचिदिति। विषये-उदाहरणविशेषे। निमित्तापेक्षा—

---

१ 'न चा' पा०। २ अयं पाठः क्वचित्। ३ पूर्ववार्तिकस्यैव व्याख्यानं युक्तं भवेत्। पूर्वं न वार्तिकमित्यन्ये।

स्थितमिदं भवत्यसिद्धं बहिरङ्गमन्तरङ्ग इति। एवमेषा सिद्धा परिभाषा[1] भवति॥ कुतो नु[2] खल्वेतद्द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः

प्र०]विषये निमित्तापेक्षा वाक्यभेदेन प्रधानकार्ये व्याप्रियते, यथा 'विप्रतिषेधे परं कार्य'मिति। एषा हि 'वृक्षे'ष्वित्यादौ 'बहुवचने झल्ये'दित्यस्मिन्प्रवृत्ते 'वृक्षेभ्य' इत्यादावेत्त्वदीर्घत्वयोर्विप्रतिषेधे परमेत्त्वं प्रवर्तयति। तद्वदसिद्धपरिभाषा [हि]'वृक्षस्तिष्ठती'त्यादौ विसर्जनीयशास्त्रे प्रवृत्ते नार्कुटादौ रेफस्याऽसिद्धत्वं विदधती प्रधानं विसर्जनीयं विषयविशेषे व्यवस्थापयन्ती विषयं सङ्कुरुते। न च 'पूर्वत्राऽसिद्ध'मित्यनेन योगेन बहिरङ्गपरिभाषा रेफे पूर्वस्मिन्नसिद्धा क्रियते। प्रधानसन्निधौ गुणानां परस्परेणाऽसम्बन्धात्। तदुक्तं–'गुणानां च परार्थत्वाद् संबन्धः समत्वात्स्या'दिति। विध्यन्तरशेषभावाच्च वाक्यभेदेनाप्युपतिष्ठमाना वाक्यान्तरे विसर्जनीयेनैकवाक्यभावात्पौर्वापर्याऽभावात् 'पूर्वत्रासिद्ध'मित्यनेन विसर्जनीये कर्तव्ये नाऽसिद्धा क्रियते, पूर्वोक्ताद्गुणत्वाद्वा। कुतो न खल्विति। 'असा आदित्य' इत्यादि 'पूर्वत्राऽसिद्ध'मित्यस्याऽवकाशः। 'पचावेद'मित्यादि बहिरङ्गपरिभाषायाः। नार्कुट'इत्यादौ तु द्वयोः सन्निपातः। यद्यपि 'पूर्वत्राऽ-

उ०]विप्रतिषेधादिरूपनिमित्तापेक्षा। व्याप्रियत इति। प्रधानकार्यं विशेषेऽवस्थापयतीत्यर्थः। वृक्षेष्वित्यादाविति। अनेन एत्वशास्त्रस्य विनाऽपि परिभाषा स्वविषये प्रवृत्तिं दर्शयति। तद्वदिति। 'विप्रतिषेधे पर'मितिवदित्यर्थः। विषयं–लक्ष्य। रेफे पूर्वस्मिन्नसिद्धेति। कार्यकालपक्षे बहिरङ्गपरिभाषायास्त्रिपादीस्थत्वेन पूर्वरेफदृष्ट्या असिद्धतया कथं तस्य विसर्गं प्रत्यसिद्धत्वं प्रतिपादयेदिति शङ्कार्थः। प्रधानेति। 'पूर्वत्रे'त्यनेनाऽसिद्धपरिभाषाया नासिद्धत्वं प्रतिपाद्यत इत्यर्थः। नन्वेवं विसर्गविधौ उपस्थिताऽसिद्धपरिभाषाया 'आगन्तूनामन्ते निवेश' इति न्यायेन तदुत्तरत्वात्पूर्वत्र विसर्जनीये तस्या असिद्धत्वात्कथं सा रेफाऽसिद्धत्वं प्रतिपादयेदत आह—विध्यन्तरेति। वाक्यान्तरे इति। वाक्यैकवाक्यतापन्ने महावाक्ये इत्यर्थः। पूर्वोक्तादिति। कार्यकालपक्षे अस्या उपस्थितिसामर्थ्यादेव रेफं प्रत्यपि न विसर्गाऽसिद्धत्वमिति कथं सन्निरूपितं बहिरङ्गत्वमित्यपि न वाच्यम्। अनया एव युक्त्या सर्वशङ्काकलङ्कपरिहारः सुकर इति बोध्यम्। एवमेषा परिभाषा सिद्धा भवतीति। बहिरङ्गपरिभाषाऽत्र आप्ता भवतीत्यर्थः। यद्वा एवमेषा परिभाषा–पूर्वत्रासिद्धत्व'मित्येषा–अप्राप्ता भवतीत्यर्थं। असा आदित्य इति। अत्र यलोपस्यासिद्धत्वाद्दीर्घो न। बहिरङ्गेति। तथा ह्यत्रैत ऐ इत्यैत्वं न। सावकाशत्वमुक्त्वा एकत्र युगपत्प्राप्तिरूपसमवस्थितत्वं दर्शयति–नार्कुट इति। यद्यपीति। एवं परिभा

१ परिभाषा सिद्धा। 'असिद्धा' पा०। २ 'न' पा०।

'पूर्वत्रासिद्ध'मिति चे 'असिद्धं बहिरङ्गमन्तरङ्ग इति च, 'पूर्वत्रासिद्ध'मित्येता-मुपमृद्याऽसिद्धं बहिरङ्गमन्तरङ्ग इत्येतया व्यवस्था भविष्यति, न पुनरसिद्धं बहिरङ्गमन्तरङ्ग इत्येतामुपमृद्य 'पूर्वत्रासिद्ध'मित्येतया व्यवस्था स्यात् ? ॥ अतः किम् ? ॥ अतोऽयुक्तः परिहारो 'न वा बहिरङ्गलक्षणत्वा'दिति ॥

रोः सुपि ।८।३।१६।

किमर्थमिदमुच्यते न 'खरवसानयोर्विसर्जनीय' इत्येव सिद्धम् ? ॥ ॥ ॥ नियमार्थोऽयमारम्भ ॥*॥ [ नियमार्थोऽयमारम्भ[1] ] 'रोरेव सुपि

प्र.] सिद्ध'मित्यधिकारस्तथापि मर्यादा सपाद्याध्यायीं प्रति पादत्रयपठितेस्य सर्वस्याऽसिद्धत्वप्रतिपादनात्परिभाषासाधर्म्यात् परिभाषाव्यवहार । तत्रानयो परिभाषयो सावकाशत्वात्तु यपलयोरप्रतिपत्त्वाश्रीयमाणाया नार्कुटादौ विसर्जनीयप्रसङ्गः । पर्याये चाश्रीयमाणे पक्षेऽनिष्टविसर्जनीयप्राप्ति । अनयोश्च परस्परनिमित्तव्याघातात्परस्परस्योपमर्दकत्वम्। तथा हि बहिरङ्गपरिभाषा रेफस्याऽसिद्धत्वं कुर्वती पूर्वलक्षणविषयाऽभावा'त्पूर्वत्रासिद्ध'मित्यस्या अप्रवृत्तिं साधयति । 'पूर्वत्रासिद्ध'मित्येयाऽपि विसर्जनीयाऽसिद्धिविधानेनाऽन्तरङ्गाऽभावाद्रेफस्याऽपि तदपेक्षबहिरङ्गत्वाऽभावाद्बहिरङ्गपरिभाषाया प्रवृत्तिं विहन्ति । ततश्चा'ऽयुक्तोऽय परिहारो न वा बहिरङ्गलक्षणत्वा'दिति चोद्यान्तमेवेद भाष्यम् । ततश्च 'विसर्जनीयोऽनुत्तरपद' इति वक्तव्यमेव । यदा तु लक्ष्यदर्शनवशाद्बहिरङ्गपरिभाषाऽऽश्रीयते यथा चकारेष्विष्टतो व्यवस्था, तदा युक्त एव परिहारो 'न वा बहिरङ्गलक्षणत्वा'दिति । [ खरवसानयोर्विसर्जनीय ] ।

रो सुपि । नियमार्थ इति । अथ 'सुपी'ति प्रत्याहारग्रहणात् 'पयोभ्या'

उ ] यो'रित्ययुक्तमिति भाव । अप्रतिपत्ताविति । क्वचिदप्रवृत्त्या शास्त्रस्य चरितार्थत्वाद्विरोधाऽप्रतिपत्तिरित्यर्थ । पर्याये चेति । तुनादिवदित्यर्थ । भाष्योक्तमुपमर्दकत्वमुपपादयति–परस्परेति । एवञ्च कार्यकाले ययोर्द्वयो च भिन्नापा बहिरङ्गासिद्धत्वाऽप्रवृत्ति'रिति भाष्याल्लभ्यते। वस्तुत प्रयत्नत्वेन बलवता पूर्वत्रासिद्धमित्यनेनानुमानिक्या असिद्धपरिभाषाया बाध एवोचित । भाष्ये–अयुक्त इति। सयोगान्तस्य लोपो रदाभ्या मित्यत्राऽन्यत्र चोक्तोऽमङ्गल इत्यर्थ । यदा त्विति । लक्ष्यवशात्क्वचिदानुमानिकेनाऽपि प्रत्यक्षबाध इत्यभिमान । लक्ष्यैकचक्षुषां तु वचनान्दवावश्यकानीति बोध्यम् ॥ १५ ॥

१ इद क्वचिन्न । २ केचित्त्विद भाष्यमेव न वार्तिकमिति मन्यन्ते । तदाऽस्याऽस्मिन् व्याख्यानं नावश्यकम् । ३ 'पनीतस्य' ४ 'त्वाश्रय' ।

नान्यस्य सुपि' ॥ क्व मा भूत् ? ॥ गीर्षु धूर्षु ॥ [ रो सुपि ] ।

**भोभगोअघोअपूर्वस्य योऽशि ।८।३।१७**

॥ * ॥ अशग्रहणमनर्थकमन्यत्राऽभावात् ॥ * ॥ अशग्रहणमनर्थकम् । किं कारणम् ? ॥ 'अन्यत्राऽभावात्' । न ह्यन्यत्र रुरस्त्यन्यदतोऽशः ॥

ननु चायमस्ति—छन्दःसु पयःस्विति ॥ किं पुनः कारणं सुप्परस्य रुरुपादीयते न पुनरयं वृक्षस्तत्र वृक्षस्त्वत्रेति ? ॥ अन्यत्र विधेर—विसर्जनीये कृते न भविष्यति ॥ इहापि तर्हि विसर्जनीये कृते न भविष्यति—छन्दःसु पयःस्विति ॥ स्थानिवद्भावात्प्राप्नोति ॥ ननु चेहापि स्थानिवद्भावात् प्राप्नोति—वृक्षस्तत्र वृक्षस्त्वत्रेति ॥ अनल्विधौ स्थानिवद्भाव. ॥ अथाऽयमल्विधिः स्था-

प्र.] मित्यादौ विध्यर्थं कस्मादारम्भो न भवति ? । 'रुरि'त्यनुवृत्त्या स्वपदे सुपो ग्रहणात्, न च सप्तमीबहुवचनादन्य उरादिः सुबस्तीति तस्यैव ग्रहणाद्विध्यर्थानुपपत्त्या नियमार्थ आरम्भः । रोरेवेति । 'रोः सुप्येवे'ति तु नियमो न भवति, 'हलोऽनन्तराः संयोग' इत्यादिनिर्देशात् । [ रो. सुपि ] ।

भोभगो । अन्यत्राऽभावादिति । यत्राऽशोऽन्य रुर्भवति तत्र 'पूर्वत्राऽसिद्ध'मिति यत्वस्याऽसिद्धत्वाद्विसर्जनीयेन भाव्यमिति तस्यैव रुत्वमित्यर्थः ।

स्थानिवद्भावादिति । ननु च रोरुकारस्यानुबन्धत्वादेव स्थानी नाल्विधित्वा-त्स्थानिवद्भावेन न भाव्यम् । उच्चारणकाले य श्रुतः स स्थानित्वेनाश्रीयते

उ ] रोः सुपि । विध्यर्थ इति । कथं चिदपि विध्यर्थत्वे असंभवति नियमो न युक्त इति भाव । विध्यर्थानुपपत्त्येति । विधिरूपस्यार्थस्यानुपपत्तेरित्यर्थः ॥ १६ ॥

भो भगो अघो । भाष्ये—अन्यत्वं कुत स्यादित्याशङ्क्याह—अन्यदतोऽश इति । भाष्ये—छन्दःस्विति । अत्र हि 'रो सुपी'ति विसर्गः । तत्र रो स्थानित्वेन स्थानिवद्भावेन रुत्व दुर्लभं । वृक्षस्त्वत्रेत्यत्र तु 'खरवसानयो'रिति रेफस्य विसर्गः । न हि तस्य स्थानिवद्भावेन रुत्व दुर्लभम् स्थानिभूताल्धर्मत्वात् । स्थानिभूताल्धर्माश्रये कार्ये निषेध इति भाव. । अनल्विधित्वादिति । अन्यानिवृत्तोऽयं विसर्गविधि न तु स्थानिक इति,—अत्रापि स्थान्यल्धर्मत्वाद्विसर्गस्य रुत्व दुर्लभमिति भाव । इति मन्यत इति । सिद्धान्त्येवं मन्यत इत्यर्थः । इदमेवाभिप्रेत्य 'विशिष्ट होऽनन्याश्रयत्वे ?? नाने'ति स्थानिवत्सूत्रभाष्ये उक्तमिति अयं सिद्धान्त एव । नियमसूत्राणि वाक्यार्थमर्यादया विधायकान्येव, आर्थिकस्तु निषेध इति पक्षच्छाया भाष्ये ध्वनितम् । भाष्ये—ननु चेहापि स्थानिवद्भावादिति । स्थानि-

१ इति क्वचित् । २ 'इत्यादिनिर्दे' ।

च्छक्यमरग्रहणमवक्तुम् ? ॥ बाढं शक्यम् ॥ अल्विधिस्तर्हि भविष्यति ॥ कथम् ?॥ इदमस्ति 'रो रि'ति । ततो वक्ष्यामि—'खरवसानयोर्विसर्जनीय'—'र' । ततो 'रा सुपि' । 'विसर्जनीयो र'इत्येव ॥

उत्तरार्थं तर्ह्यरग्रहणं कर्तव्यं,—'हलि सर्वेषां',—हल्यशीति यथा स्यादिह मा भूत्—वृक्षवयतेरप्रत्ययो—वृक्षव्करोति ॥ [ भोभगोअघो ] ॥

प्र ] न तु प्रतिपत्तिकाल इति मन्यते । अल्विधिस्तर्हीति । रेफ एव स्थानी, किं तु नाह्वशेषणं, रोर्या रेफस्तस्य विसर्जनीय इत्यर्थः । ततो वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । वृक्षवयतेरिति । केचिद्वृक्षवन्तमाचष्ट इति णिचि टिलोपे च रूपमित्याहुः । तदयुक्तम् । इष्ठवद्भावान्मतुपो लुका भाव्यं, न टिलोपेन तस्माद्वृश्चतेर्वृक्षः वृश्चतीति क्विप्, सम्प्रसारणे कृते वृश्वृक्षमाचष्ट इति णिचि टिलोपे च क्विप्प्रत्ययः क्रियते । क्विपि तु सत्येकदेशविकृतस्यानन्यत्वाद्वृश्चति ग्रहणेन ग्रहणाद्वकारस्य सम्प्रसारणं स्यात्, लोपो व्योर्वली ति लोपो वा । न च णिलोपस्य स्थानिवद्भावः 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यान'मिति प्रतिषेधात् । विचि तु णिलोपस्य स्थानिवत्त्वाद्वलोपो नास्ति, 'हलि सर्वेषा'मित्यनेन तु वलोपे कर्तव्ये पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधाद्वलोपः स्यादिति हल्विशेषणार्थमरग्रहणं क्रियते । केचित्तु वृक्ष वेति पक्षवी, वृक्षव्य

उ ] भूतोऽस्मात्प्रवृत्तिधर्माश्रयो नायमल्विधिः, समुदाये वर्तमानस्य शब्दस्य निमित्तत्वात्तद्वत्येवात्रापि स्थानिवत्त्वमिति भावः । उत्तरम्—अनल्विधाविति । उक्तं आशयः । विसर्जनीय इत्यर्थ इति । एवञ्च रो सुपी ति सूत्रेऽपि रेफस्यैव स्थानित्वे[1]मित्यल्विधित्वात्स्थानिवत्त्वाभाव इति भावः । न टिलोपेनेति । मतुब्लुकष्टिलोपापवादत्वादिति भावः । ननु णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य लोपविधानेन वृश्वने स्थानित्वे मानाऽभावादकारे वृश्चनिवृत्तस्य दुर्लभत्वात्सम्प्रसारणाऽप्राप्तिः । न च छिन्नपुच्छश्वन्यायेन वृश्चतित्वं । सहृदयवाक्यगमेन वृश्चनित्वाऽप्रत्यभिज्ञानात् । एतेन सम्प्रसारणेति पत्वं स्यादित्यपास्तम् । न च पदस्येत्यधिकारेण वृश्चान्तत्वस्यापि निमित्तत्वाच्च स्थानिवत्त्वं न सुलभम् । झला जशोऽन्त इत्यं[2] तग्रहणेनेट्स्वेपु पदस्येत्यस्य वैयधिकरण्येनैवान्वयादत आह—लोपो व्योरिति । इद च तदपवादस्य ऊठ उपलक्षणम् । न च णिलोपस्येति । न च पदान्तविधित्वं प्रातिपदिकादेव णिजुत्पत्त्या पदान्तत्वाऽभावात् लोपस्य चरमावयवत्वाभावाच्च । क्विलुगिति । क्वौ लुप्त वा णौ विधेरित्ति भावः । विचि त्विति । अन्तर्भूतणिजाश्रयवलोपस्तु न, बहिर्भूतणिनाद्यपेक्षटिलोपादेरसिद्धत्वात् । अत्र अन उपधाया इति वृद्धिप्राप्तेराह—चेतेर्वेति । अत्र

[1] स्थानित्वं । [2] त्यन्ते ।

## ओतो गार्ग्यस्य ।८।३।२०।

किमर्थमिदमुच्यते न 'लोपः शाकल्यस्य'त्येव सिद्धम् ? ॥

॥*॥ ओकाराल्लोपवचनं नित्यार्थम् ॥-॥ ओकाराल्लोपवचनं क्रियते । किमर्थम् ? । 'नित्यार्थम्' । नित्यार्थोऽयमारम्भः ॥ [ ओतो गार्ग्यस्य ] ॥

## उञि च पदे ।८।३।२१।

पद इति किमर्थम् ? ॥ तन्त्र उतं, तन्त्रयुतं, तन्त्र उतम् ॥

॥ ॥ पद इति शक्यमवक्तुम् ॥ ॥ [ पदे इति शक्यमवक्तुम्[3] ] । कस्मान्न भवति–तन्त्रे उतं तन्त्रयुतं तन्त्र उतमिति? ॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ उत्तरार्थं तर्हि पदग्रहणं कर्तव्यं–'ङमो ह्रस्वादचि ङमुण्नित्य'मित्यपदे मा भूत्–दण्डिना शार्ङ्गिणा ॥ [ उञि च पदे ] ॥

प्र ]मात्रच इति पूर्ववण्णिनादि । अथ वकारे परतो 'लोपो व्योर्वली'ति लोपः कस्मान्न भवति ? । न च गिरोऽस्य स्थानिवद्भावोऽस्ति, पदान्तविधौ तन्निषेधात् । नैष दोषः । पदान्ते विधीयमाने स्थानिवत्त्वनिषेधो, न च लोपः पदान्तस्तस्याऽभावस्यलात् । अदग्रहणाऽनुरोधेन चैतद्भाष्यकारेणोदाहृतम् । तथा हि लणित्यत्रोक्तं 'न पदान्ता हलोऽण सन्ती'ति । [ भोभगोअघो ] ।

**ओतो गा** । **किमर्थमिति** । लोपः शाकल्यस्य'त्यनेन पाक्षिकः सिद्ध एव लोपोऽनेनापि गार्ग्यस्य मतेन लोपो नान्येषामिति विकल्पेनैव विधेय इति प्रश्नः । **ओकारादिति** । गार्ग्यं ह्यस्या स्मृतावोतो नित्यमेव लोपं स्मरतीति पाणिनिरपि तथैवेच्छति । एवञ्च भो अत्रे'ति नित्यं भवति, न तु 'भो यत्रे'ति ॥

**उञि च पदे** । अयमपि नित्याऽर्थो योगः । [ उञि च पदे ] ।

उ ] टिलोपस्य स्थानिवत्त्वान्न वृद्धिरिति भावः । **पदान्तविधाविति** । विनन्तोत्तरद्वय पदत्वमिति भावः । **पदान्ते विधीयमान इति** । विधिशब्दो भावसाधनः अन्तशब्दश्चावयववाचीति भावः । **अनुरोधेन चेति** । एवञ्चेदं भाष्यं पूर्वपक्षेणेदमुक्तिः । 'हलि सर्वेषा'मित्यनन्तरं भोसादिमाद्यवर्णेण 'रोरी'त्यस्यानुवृत्त्या च रस्थानिकयस्यैव लोपादित्यपि बोध्यम् । [ भोभगोअघोअपूर्वस्य ] ॥

**ओतो गार्ग्यस्य** । **इति प्रश्न इति** । न च स्वमतप्रच्युत्यभावादेदं गार्ग्यशाकल्याभ्यां लोपस्यैव स्मृत्या तद्वाक्येऽन्यग्रहणेन तयोरग्रहणादिति भावः । [ओतो गार्ग्यस्य] ॥

**उञि च पदे** । **भाष्ये दण्डिनेति** । न च पदस्येत्यविकारेण विभक्तिविपरिणामेन च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो विधीयमानो ङमुट् कथमत्र प्राप्नोति

१ इदं क्वचिन्न । २ इदं भाष्यमित्यन्ये । ३ इदं क्वचिन्न ।

विधेयं, षत्वं च प्रतिषेध्यम् । छत्वं विधेयम्—कुर्वञ्छेते कृषञ्छेते । यदि तच्छश्छोटीति 'झय पदान्ता'दित्येवं तत् ॥ किं पुनः कारणं—'झय पदान्ता'-दित्येवं तत् ? ॥ इह मा भूत् 'पुरा क्रूरस्य विसृपो विरप्शि'न्निति । षत्वं च प्रतिषेध्यं–प्रत्यङ्क्सिञ्च उदङ्क्सिञ्च । 'आदेशप्रत्यययो'रिति षत्वं प्राप्नोति । पूर्वान्ते पुनः सति 'सात्पदाद्यो'रिति प्रतिषेधः सिद्धो भवति । तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः केचित्परादयः । अयं तु खलु शितुक्छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः । तत्र कुर्वञ्छेते कृषञ्छेते इति 'रषाभ्यां नो णः समानपदे' इति णत्वं प्राप्नोति ॥ नैष दोषः श्रुत्वे योगविभागः करिष्यते । इदमस्ति 'क्षुभ्नादिषु च' । [ क्षुभ्नादिषु ] न णकारो भवति । ततः—'स्तोः श्चुना' । स्तोः श्चुना सन्निपाते न णकारो भवति ॥ ततः—'श्चुः' । श्चुश्च भवति स्तोः श्चुना सन्निपाते ॥ [ ८ सि धुट् ] ।

ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३।३२।

॥ * ॥ ङमुटि पदादिग्रहणम् ॥ * ॥ ङमुटि पदादिग्रहणं कर्तव्यम् । इह मा भूत्–दण्डिना शाकटिनेति ॥ तत्तर्हि वक्तव्यं ? ॥ न वक्तव्यम् ॥ 'पदा'दिति वर्तते ॥ एवमपि–परमदण्डिना परमच्छत्रिणेत्यत्र प्राप्नोति ॥

प्र ] नियोगत इति । परादौ छत्वं न सिध्यतीति वचनादवश्यं पूर्वान्तः कर्तव्य इत्यर्थः । तत्र नकारस्याऽपदान्तत्वाण्णत्वप्रसङ्गः । न च 'नश्चापदान्तस्य झली'ति नकारस्याऽनुस्वारे परसवर्णे च रूपं सिध्यति । अनुस्वारे कर्तव्ये तुकोऽसिद्धत्वात् । श्चुत्व इति । णत्वप्रतिषेधे श्चुत्वमाश्रयासिद्धम् । [ ८ सि धुट् ] ।

उ ] धुगे विधायकभेदेन भेदमवलम्ब्य ङुट् धुट् तुगेऽवलम्ब्य च भाष्ये केचित्परादय इति बहुवचनम् । वचनादिति । यथान्यासं वचनादित्यर्थः । अपदान्तत्वादिति । परादौ तु पदान्तत्वेन 'पदान्तस्य ने'ति णत्वप्रतिषेधसिद्धिरिति भावः । ननु पूर्वस्मिन् णत्वप्रतिषेधे कर्तव्ये परस्य श्चुत्वस्याऽसिद्धत्वात्कथं सिद्धचेदत आह–णत्वप्रतिषेध इति ।

ङमो ह्रस्वादचि । भाष्ये पदादिग्रहणमिति । पदादेरचः इत्यर्थः । अचि इति षष्ठ्यर्थे सप्तमी । यद्यपि पदस्येत्यनुवृत्तस्याऽचानि विशेषणं तथा च 'तस्मान्नुड्चो'रित्यादाविवादे पदस्येत्यर्थेनापि व्यवहारः सम्भवति तथापि यत्र विशेषणे विशेष्ये च सप्तमी तत्रैव यस्मिन्विधिरिति न्यायप्रवृत्तेस्तदादिग्रहणार्थोऽसम्भव इति भावः । अतएव 'पुंसि'त्यादौ धुडादिसिद्धिः । अन्यथा सादेः पदस्यैव स्यात् । अतएव आर्धधातुकस्येति सूत्रे वलादेरित्यादिग्रहणं चरितार्थम् । अन्यथा वलादेरेव वदेत् । पदादिति वर्तत इति । एवञ्च

१ इदं क्वचिन्न । २ इदं लुप्तम् ।

साने संहिताकार्याणि, तानि न सिध्यन्ति–'अणोऽप्रगृह्यस्यानुनासिकः' इति ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'न सर्वस्य विसर्जनीयस्य सत्वं भवती'ति यदयं 'खरवसानयोर्विसर्जनीयः' इत्याह । इतरथा 'खरवसानयोः सो भवती'त्येव ब्रूयात् । तच्चे लघु भवति, 'विसर्जनीयस्य सः' इत्येतच्च[2] न वक्तव्यं भवति ॥ अवश्यं 'शर्परे विसर्जनीयः' इत्यत्र प्रकृतिनिर्देशार्थं विसर्जनीयग्रहणं कर्तव्यम् ॥ अथेदानीमेतदपि रसौ[3] विध्यर्थं पुरस्तादपकृष्यते[4]–'खरवसानयोः सः' इत्यत्रैव, एवमपि 'कुप्वोः ≍क≍पौ चे'त्ये

प्र.] मन्निमेदात्मन्त्रयोर्बाध्यबाधकभावोऽनुपपन्न इति भावः । अणोऽप्रगृह्यस्येति । 'नावसाने' इति तत्रानुवर्तते, संहिताधिकारस्योत्तरार्थत्वस्यानुवर्त्यं । तोलीति पर-सवर्णाऽसंहितायां मा भूदित्येवमिति तनानीति । ततश्च संहितावसानोभयाश्रयोऽनुनासिको दधि मधु इत्यत्र सिद्धो भवति । यदि तु सत्यपि बाध्यबाधकभावे यत्नैवाव-सानाश्रयं कार्यं तत्रैव संहिताग्रहणेनाऽसम्बन्धः, उत्तरत्र त्वनुवृत्तिरेव तदा न कश्चिद्दोषः । किं तु प्रतियोगिना विच्छिन्नस्य संहिताग्रहणस्योत्तरत्रोपस्थानं सन्दिग्धमेवेति भिन्नविषयत्वात्समावेश एवानयोः सञ्ज्ञयोरेष्टव्य इति भाष्यकाराभि-प्रायः । प्रकृतिनिर्देशार्थमिति । स्थानिनिर्देशार्थमित्यर्थः । अन्यथा रस्य शर्परे विसर्जनीयः स्यात् । अथेदानीमिति । एवमत्र (सूत्र)सन्निवेशः क्रियते–'रोरि' 'खरवसानयोः सः' 'रो सुपि' 'शर्परे विसर्जनीयः' इति । तत्र 'शर्परे' इत्यत्र 'र' इति वर्तते न तु 'रो'रिति । एवमपीति । यदि 'रो सुपी'त्यस्यानन्तरं 'शर्परे विसर्जनीयः' 'वा शरि' 'कुप्वोः ≍क≍पौ चे'त्यादि 'र'स्थानिकाऽभिधानार्थं

उ.] दादिति । नन्वणोऽप्रगृह्यस्येत्यत्र संहिताऽधिकाराभावे को दोषोऽत आह–संहिताधि-कारेति । सत्यपि बाध्यबाधकभावे इति । पूर्वपरयोः सन्निकर्षपर्यन्तैव वा संहितेत्यपि बोध्यम् । नहि तथैवाश्रीयतामत आह–किन्त्विति । प्रतियोगिनेति । विरोध्यर्थ-प्रतिपादकेन 'अवसाने' इत्यनेनेत्यर्थः । परेतु व्यवधाना[illegible]पि [illegible]धिकारेषु न मण्डूकप्लुतिः । सदातोऽनो यायेन तेषामधिकार[illegible]मवाच्य । विषयभेदेऽपि सत्यपि सम्भवे बाधनं भवतीति न्याय्य[illegible] प्राप्तो येन, अवसानकार्यं[illegible] पाठस्या-स्यौदा[illegible]दिति सूत्र[illegible]विषयम्, अनयोस्तु लोके[illegible] वेदन्यायौ[illegible]भावेन न बाध्यबाधकभाव इति भाष्याशयः । 'अणोऽप्रगृह्यस्ये'[illegible] अवसानविसर्गस्याऽपि, तस्याऽपि संहिताऽधिकारे पाठादित्याह । ननु रोरितीति । तेन 'पुनः स्वरङ्कि'रित्यादौ विसर्जनीयसिद्धिः । ननु यत्नमपि रस्यैव विधेयः, तत्राह–तदा

१'न' भाष्ये क । २'रुत्वं न' दि पा० । ३'[illegible]' दि पा० । ४'[illegible]' पा० । ५'कृष्यते' पा०

वमादिनाऽनुक्रमणेन व्यवच्छिन्न 'भोभगोअघोअपूर्वस्य योऽशि'त्यत्र रुग्रहणं कर्तव्यं स्यात् ॥ एवमप्येक विसर्जनीयग्रहणं व्याजो भवति । सोऽयमेव लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यो 'न सर्वस्य विसर्जनीयस्य सत्वं भवती'ति ॥ एवमप्यनैकान्तिकं ज्ञापकम्, एतावज्ज्ञाप्यते 'न सर्वस्य विसर्जनीयस्य सत्वं भवती'ति, तत्र कुत एतदिह भविष्यति–वृक्षस्तत्र प्लक्षस्तत्रेति, इह न भविष्यति वृक्षः प्लक्ष इति ॥

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति–'नास्य विसर्जनीयस्य सत्वं भवती'ति यदयं 'शर्परे विसर्जनीय' इत्याह ॥ अथ वा 'हशी'ति वर्तते॥ क्व प्रकृतम्? ॥ 'हलि सर्वेषा'मिति ॥ यदि तदनुवर्तते 'मय उञो वो वा' 'हलि चे'ति

प्र.] पठित्वा 'भोभगो' इति यस्य रस्य स्थाने विधीयते तस्य 'स्वरत्रे'त्यादावपि प्राप्नोति, रुग्रहणस्य विच्छिन्नत्वात् पुनरुपादानं कर्तव्यं भवतीत्यर्थः । एवमपीति । यथान्यासे त्रीणि ग्रहणानि भवन्ति द्वे विसर्जनीयग्रहणे तृतीयं सग्रहणम्, अन्यथान्यासे तु द्वे ग्रहणे–'स' ग्रहणं 'रु'ग्रहणं च। तत्र 'खरवसानयोः स' इति सग्रहणं 'खरवसानयोर्विसर्जनीय' इति विसर्जनीयग्रहणेन निर्मीयते, रुग्रहणं 'विसर्जनीयस्य स' इति 'स'ग्रहणेन। 'तत्र विसर्जनीयस्ये'ति विसर्जनीयग्रहणमधिकत्वाद्व्याजो भवति । अत्र क्षेपणार्थस्य घञि रूपं विक्षिप्यते तेन न पठितव्यं भवतीत्यर्थः । अथ वा व्याजोऽनृतमुच्यते । आनर्थक्यादनृतं भवति। न कर्तव्यं भवतीत्यर्थः । तस्मात्सर्वस्य विसर्जनीयस्य सकारो न भवति। यदयमिति । विपर्यये हि विज्ञायमाने पुरुषः त्सरुः' इत्यादौ सत्वाऽभावः

उ] स्वरत्रेति । निर्मीयत इति । परिकल्प्यत इत्यर्थः । ननु नरः प्लुत्वाहुरुणा कथ निमानमिति वाच्य, कुष्वोः ≍क ≍पौ चेत्यत्र खरवसानयो र इत्येव सिद्धे यथोद्देशपक्षगौरवानादरेणैव विसर्जनीयपदस्य सत्वेन वाक्यभेदपक्षगौरवस्याऽप्रयोजकत्वमित्याशयात् । न च कवर्गतृतीयादौ 'कुप्वो रिति अत्र न्यासे दुर्वार मण्डूकानुवृत्त्या खरेत्यस्य कुप्वोरिति सूत्र सबन्धेनाऽदोषात् । न चैवमपि गीर्भ्यामित्यादौ वा शरीति पाक्षिकविसर्गो दुर्वार । 'रो सुपी'ति चाऽनन्तरस्येति न्यायात्सस्यैव नियम । वा शरि त्यस्याऽसिद्धत्वाच्च । यथान्यासे तु वा शरीत्यस्य विसर्गस्थानिकत्वात् नियमेन विसर्गस्यैवाऽभावान्न दोष इति वाच्यम् । वा शरी त्यत्राऽपि रो सुपी'त्यनुवर्त्य वाक्यभेदेनाऽर्थाधिकारविषयत्वेन व्याख्यानान्नाऽदोषादिति भाव । घञीति । कर्मणि च म । यद्येनावदिति । विसर्जनं यदर्थं च

१ इद क्वचित्र। २ 'एतावान्' पा०।

स्याताम्—अद्भिः प्सात वासः क्षौमम् ॥ वचनाद्भविष्यत ॥

अस्ति वचने प्रयोजनम् ॥ किम्?॥ पुरुष त्सरुक ॥ तत्तर्हि वक्तव्य?॥ न वक्तव्यम्। यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्रानुवर्तिष्यते, तस्मिंश्च शर्परे विसर्जनीयोऽसिद्ध ॥ नाऽसिद्ध ॥ कथम्?॥ अधिकारो नाम त्रिप्रकार । कश्चिदेकदेशस्थ सर्वं शास्त्रमभिज्वलयति।

प्र] त्वात्। वचनादिति। यदि 'शर्परे विसर्जनीय' इत्यस्य विसर्जनीयस्य ≍क≍पौ स्याता तदैतद्विसर्जनीयविधानमनर्थकं स्यात्। अस्तीति। यत्र कुप्वभ्यामन्य शर्पर. खरस्ति तत्र सकारापवादविसर्जनीयविधानमर्थवत्। कुप्वोस्तु शर्परयोर्विसर्जनीयस्य ≍क≍पप्रसङ्ग । यदेतदिति। 'विसर्जनीयस्य स' इत्यत्र सकारस्य स्थानी यो विसर्जनीय उपात्त स द्विविध सम्भवति, खरवसानलक्षण शर्परलक्षणश्च। तत्र 'पूर्वत्रासिद्ध'मिति सत्व शर्परलक्षणस्याऽसिद्धत्वादितर सत्वस्य स्थानी विज्ञायते। स एव चेहानुवर्तत, तदथा वा शब्द इति स एवेह स्थानी गृह्यते। तत्र वचनप्रामाण्यादुत्सर्गे सत्वे कर्तव्येऽपवादयो ≍क≍पयोरसिद्धत्वाऽभावादप्रवृत्तौ सत्वा यथेष्ट सिध्यतीत्यर्थ । शर्परलक्षणश्च विसर्जनीय आदेशोऽपूर्वो विसर्जनीयस्य विधीयते न तु तस्यैव सत्वसाधनार्था प्रत्यापत्तिरिति दर्शनमाश्रित्यैतदुच्यते। प्रत्यापत्तौ हि विसर्जनीयस्य भेदाऽभावादयुक्तोऽनन्तरोऽर्थ स्यात्। ननु च वक्ष्यत्येतत्—'न योगे योगोऽसिद्ध किन्तु प्रकरणे प्रकरणमसिद्ध'मिति, तत्रैकप्रकरणत्वात्सत्वे 'शर्परे विसर्जनीय' इत्यस्याऽसिद्धत्व नास्ति। नैष दोष । कार्यभेदात्प्रकरणभेदात्। एकेन हि सकारो विधीयते, अन्येन विसर्जनीय । कश्चिदिति। यद्यपि सर्वशास्त्रावज्वलन परि

उ.] स एवेति। स्वरितत्वेन तदर्थस्य तस्यैव शब्दस्योत्तरत्रोपस्थानादिति भाव । शब्दान्तरात्तदनुमानपक्षेऽप्याह—तदर्थो वेति। सति सम्भवे तदर्थ एव शब्द उत्तरत्रानुमीयते नार्थान्तरयुक्त इत्यर्थ । उत्सर्गे इति। सत्व प्राप्तेऽस्यासिद्धत्वादिति भाव । न तु सत्वसाधनार्थेति। तथाहि सति शर्परेऽत्वेव वदेत्। 'कुप्वो'रिति सूत्रेऽपि चेन सत्वेनेत्यनुकृष्य तत्सामर्थ्यात्पक्षे विसर्गसिद्धिरिति भाव । भेदाभावादिति। खरवसानलक्षणशर्परलक्षणयोरविशेषादुभयोरपि स्थानित्व स्यादिति भाव । एकप्रकरणत्वादिति। सर्वस्य विधेर्विसर्गस्थानिकत्वादिति भाव ।

कार्यभेदादिति। स्थानिभेदाऽभावेऽपीत्यर्थ । वस्तुतो 'योगे योगोऽसिद्ध' इत्येव सिद्धान्त इति चतुर्थपादे निरूपयिष्याम । सर्वशास्त्रावज्वलनमिति। तच्च यथोद्देश

1 इदं क्वचित्र।

यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयति । अपरो[1] यथा—रज्ज्वाऽयसा वा बद्धं काष्ठमनुकृष्यते तद्वत् । अपरोऽधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति योगे योगे उपतिष्ठते । तद्यदैष पक्षः—'प्रतियोगं तस्याऽनिर्देशार्थ' इति तदा हि यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्राऽनुवृत्तं सद् यत्सपद्यते । तस्मिंश्च शर्परे विसर्जनीयः सिद्धः । एवं च कृत्वा शर्परयोरेव कुप्वो ×क×पौ स्याताम्, वासः[2] क्षौममद्भिः प्सातमिति ॥ एवं तर्हि योगविभागः करिष्यते । 'शर्परे विसर्जनीयः' । 'वा शरि' । ततः 'कुप्वोः' । कुप्वोश्च शर्परयोर्विसर्जनीयस्य विसर्जनीयो भवतीति ॥

किमर्थमिदम् ? ॥ कुप्वो ×क×पौ वक्ष्यति तद्बाधनार्थं । [ततः '×क×पौ च' ] । ×क×पौ च भवतः । 'कुप्वो'रित्येव ।

प्र ] भावाधर्मस्तथापि परार्थत्वसामान्याद्भेदाऽपरामर्शेनैतदुक्तम् । तद्वदिति । चकारेणेति भावः । प्रतियोगमिति । यस्य स्वरितत्वमासज्यते तत्सदृशानि शब्दान्तराणि योगान्तरेष्वनुमीयन्ते सादृश्यात्तु तत्त्वाध्यवसायः । योगान्तरोपयोग्यर्थस्य वा तस्यैवाऽनुमानम् । अर्थभेदात्स्वभिन्नस्यापि भेदावसायः । तत्र विसर्जनीयस्य स' इति लिङ्गाऽभावान्न परिभाषा, नाऽपि चकारेणोत्तरत्र स्थानिनोऽनुकर्षः । स्वरितत्वात्त्विह सम्बध्यमानोऽपि विसर्जनीयशब्दः सिद्धं विसर्जनीयं स्थानित्वेन प्रतिपादयतीति 'शर्परे विसर्जनीय' इत्यस्यैव ×क×पप्रसङ्गः । स

उ ] पक्षे एकदेशस्य स्पष्टमेव कार्यकालेऽपि सर्वैः शास्त्रैरेकवाक्यतया परत्वादिनियामकदेशस्य पाठस्थानरूपस्यैव सत्त्वेन च एकदेशत्वमव्याहतमेव । भेदरपरामर्शेनेति । अभेदाऽध्यवसायान्नित्यर्थः । चकारेणेति । यथा त्रुटि च छ्प इत्यादौ चेन स्यम्नोरनुकर्षः । यस्य स्वरितत्वमिति । अत्र पक्षे योगान्तरेष्वर्थान्तरप्रतिपत्तिरुच्यते इत्यथ प्रत्यभिज्ञानु सादृश्यमूलेत्याह सादृश्यात्त्विति । अर्थभेदेऽप्येकशब्दत्वमिति पक्षमालम्ब्य प्रत्यभिज्ञानुपपत्तिं परिहरति योगान्तरोपयोग्यर्थस्य वा तस्यैवेति । अत्र पक्षे शब्दान्तरव्यवहारः कथं तदाह—अर्थभेदात्त्विति । तद्यदैष पक्ष' इति भाष्येणाऽस्यैवात्र सम्भव इति दर्शयत इत्याह—तत्रेति । एवञ्च यद्यप्यर्थाधिकारे न दोषस्तथापि शब्दाधिकारपक्षे दोष एवेत्यर्थः । भाष्ये कुप्वो ≍क≍पौ वक्ष्यतीति । इदं सोऽपदादौ इण प "दुदुपधस्ये ति प्रकरणस्यैवोपलक्षणमिति कश्चित् । वस्तुतः सोऽपदादाविण प इत्यनयोः पाशकल्पककाम्येष्वेव प्रवृत्त्या तद्विषये शर्परयोः कुप्वोरसम्भवः । एवञ्च सत्त्वापत्तावजिह्वा

1 'अपर' पा० । 2 क्वचोदाहरणयोः पौर्वापर्ये विपर्ययः क्वचित् । 3 शर्परयोरिति क्वचिन्न । 4 इदं प्रामादिकम् । 5 योगान्तरे ।

'शर्परयो'रिति निवृत्तम् ॥ अथवा'शर्परे विसर्जनीय' इत्येतत् 'कुप्वो ≍क≍पौ चे'त्यत्रानुवर्तिष्यते ॥

## सोऽपदादौ ।८।३।३८।

॥ * ॥ सोऽपदादावनव्ययस्य ॥ * ॥ सोऽपदादावनव्ययस्येति वक्तव्यम् । इह मा भूत्–प्रातः कल्पम् पुनः कल्पम् ॥ * ॥ रो काम्ये नियमार्थम् ॥ * ॥ रो काम्य इति वक्तव्यम् ॥ किं प्रयोजनम् ?॥ 'नियमार्थम्' । रोरेव काम्ये नान्यस्य । पयस्काम्यति ॥ क मा भूत् ? ॥ गीः काम्यति धूः काम्यति पूः काम्यति ॥*॥ उपध्मानीयस्य च ॥ * ॥ उपध्मानीयस्य च सत्त्वं वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ अयमु≍ब्जिरुपध्मानीयोपधः पठ्यते तस्य सत्त्वे कृते जश्भावे च 'अभ्युद्ग' 'समुद्ग' इत्येतद्रूपं यथा स्यात् ॥ यद्युपध्मानीयोपधः पठ्यते–उब्जिजिषतीत्युपध्मानीयस्य द्विर्वचनं प्राप्नोति । दकारोपधे पुनः सति न न्द्राः संयोगादय' इति प्रतिषेधः

प्र ]हि≍र≍पयो कर्तव्ययो सिद्ध । अथ वेति। योगविभागे प्रसक्तयो ≍र≍पयोर्निवृत्ति , अनुवृत्तौ तु प्रसङ्ग एव नास्तीति विशेष । [कुप्वो ≍क≍पौच]।

सोपदादौ । प्रात कल्पमिति । यद्यपि प्रात.शब्दोऽधिकरणवाची तथापि वृत्तिविषये शक्तिमद्वाचीति ईषदसमाप्त्या योग उपपद्यते । यथा दोषाभूत महर्दिवाभूता रात्रिरित्यादावभूततद्भाव । उपध्मानीयोपध इति । उपध्मानीयस्य पकारमन्तरेणोच्चारयितुमशक्यत्वादु≍पूर्ते आनवे इत्येतदुच्चारणार्थं पकार पठ्यते, न तु श्रवणार्थं इत्युपधात्वमुपध्मानीयस्य। कुप्वो प्रकरणाच्च यत्र जकारस्य कुत्वं तत्रैवोपध्मानीयस्य सकारोऽन्यत्र प्रत्याहारे उपदेशचोदनात् सला

उ ]मूलोपादिशाधकत्वमस्यैति खरवसानयो'रिति विसर्गस्यैव अत्र स्थानित्वमिति बोध्यम्। स्वचेदुदुरधस्येत्यत्रापि तथैवोचितम् अर्थाधिकारानुरोधादिति तद्विषयेऽपि शर्परकुप्वोर्विसर्गस्यत्वाद् । ननु योगविभागापेक्षया सपूर्णानुवृत्त्या वाक्यभेदेन व्याख्याने गौरवमत आह–योगविभागे इति । एवञ्च प्रतिपत्तिगौरवं तत्राधीनं भाव [कुप्वो ≍क≍पौ च]।

सोऽपदादौ । उत्तरसूत्रेऽप्यस्य सत्त्वं इति ध्वनयन्नुदाहरति–भाष्ये–गीः काम्यतीति । ननूपध्मानीयोपधत्वमसिद्धं पकारस्योपधात्व दित्यत आह–उपध्मानीयस्येति । ननूब्जिरित्यादावप्यनेन सत्त्वं स्यादित्यत आह–कुप्वोरिति । अन्यत्र–कुत्वविषयाऽभावे । पकार इति । आन्तरतम्यादिति भाव । ननु कुत्वनिषेधार्थेन न निपातने कथं दो

१ इदं प्रायिकम् । २ कुब्ज° ।

सिद्धो भवति ॥ यदि दकारोपधः पठ्यते का रूपसिद्धिः—उब्जिता उब्जितुमिति? ॥ ~ ॥ असिद्धे भ उँद्ज़े ॥ ॥ इदमस्ति—'स्तो श्चुना श्चुः' । ततो वक्ष्यामि—'भ उँद्ज़े'। उद्ज़ेर्भं श्चुना सन्निपाते भो भवतीति ॥ तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । निपातनादेतत्सिद्धम्[2] ॥ किं निपातनम् ? ॥ 'भुजन्युब्जौ पाण्युपतापयो'रिति ॥ इहापि प्राप्नोति—अभ्युद्गः समुद्गः ॥ अकुत्वविषये निपातनम् । अथ वा नैतदुब्जे रूपम् ॥ किं तर्हि ? ॥ गमेरेतदुपसर्गाड्डो विधीयते—अभ्युद्गतः-अभ्युद्गः । समुद्गतः समुद्गः । [सोऽपदादौ] ॥

इण षः ।८।३।३९।

किमविशेषेण स वसुरुत्वा इण उत्तरस्य सकारस्य षत्वमुच्यते आहो स्विदिण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते ? ॥ किञ्चातः ? ॥ यद्यविशेषेण स वसुरुत्वेण उत्तरस्य सकारस्य षत्वमुच्यते, निष्कृतं निष्पीतमित्यत्र सत्वस्या[4]ऽसिद्धत्वात्षत्वं न प्राप्नोति । अथेण उत्तरस्य विसर्जनीयस्यैव

प्र ]तया प्रदाति जश्त्वं चरार । निपातनादिति । यत्र जकारः श्रूयते तत्र दकारस्य स्तो श्चुनाश्चुरिति श्चुत्वे प्राप्ते 'झलां जश् झशि'त्यनेनानन्तरतमोऽपि यकारो भवतीति निपातनेन श्चुत्वनिषेधार्थेनाप्यनुमीयत इति भावः । तेन 'पूर्वत्रासिद्ध'मिति 'न न्द्राः संयोगादयः' इति द्विर्वचननिषेधे श्चुत्वस्याऽसिद्धत्वा दकारस्य द्विर्वचननिषेधः । गमेरिति । एवं च दकारोपदेशो द्विर्वचननिषेधार्थ एवेति द्विर्वचने कृते श्चुत्वमिति रूपप्रक्रियायामानुपूर्व्याश्रीयते अनभिधानाच्च घञभावादुब्जः इति न भवति । न चाभ्युद्ग इत्यत्र गमेर्ड इति घञि वोब्जे स्वरे विशेषः । डे कृत्स्वरेणाऽन्तोदात्तत्वाद्घञ्यपि थाथादिस्वरेण । [ सोऽपदादौ ]

इण षः । सत्वस्याऽसिद्धत्वादिति । 'इण षः'इत्यनेन यदा सस्य षत्व

उ.] मित्यत्रेऽत आह-यत्र जकार इति । अनुमीयत इति । दकारोच्चारणान्यथाऽनुपपत्त्येति भावः । एवञ्च द्विर्वचननिषेधोऽपि सिद्ध इत्याह-तेनेति । 'पूर्वत्रासिद्धीयमद्विर्वचने'इति हि द्वित्वे निषेधो नतु तन्निषेध इति भावः । एवञ्चेति । अत्रापि पक्षे दोषः परिहर्तव्यः । उब्जितमिद्धये उब्जेर्भो वक्तव्यः, ज्ञापकं वाश्रयणीयम् । तत्र ज्ञापकेन साक्षादेव वत्वमिति पक्षेऽपि दकारोपदेशसामर्थ्यात्पूर्वं द्वित्वं पश्चाच्छ्चुत्वमिति । रूपप्रक्रियायामिति । प्रयोगप्रक्रियायामित्यर्थः । इयेवरूपा प्रक्रियाकामानुपूर्वीति क्वचित्पाठः । नन्वत्र मुद्गेभ्यो घञि उब्ज इत्यनिष्टं स्यादत आह—अनभिधानाच्चेति । 'उब्ज इति न भवती'ति पाठः ।

इण षः । भाष्ये—इण उत्तरस्य सकारस्येति । 'स' इति विवरिणत्विभक्तिक

१ उब्जे' पा० । २ 'देव तत्सिद्ध' पा० । ३ 'सकार' । ४ सकारस्या पा० ।

षत्वं विधीयते सत्वमप्यनुवर्त्तते उताहो न ? ॥

किं चातः[2] ? ॥ यद्यनुवर्त्तते सत्वमपि प्राप्नोति । अथ निवृत्तं 'नमस्पुरसोर्गत्यो'रित्यत्र सकार[3]ग्रहणं कर्त्तव्यम् ॥

तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्त्तते उताहो न ? ॥

किं चातः[2] ? ॥ यद्यनुवर्त्तते षत्वमपि प्राप्नोति, अथ निवृत्तम्– 'इदुदु[4]पधस्य चाऽप्रत्ययस्ये'त्यत्र षकारग्रहणं कर्त्तव्यम् ॥

तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्त्तते उताहो न ? ॥

किं चातः ? ॥ यद्यनुवर्त्तते सत्वमपि प्राप्नोति । अथ निवृत्तं 'तिरसोऽन्यतरस्या'मित्यत्र सकारग्रहणं कर्त्तव्यम् ॥

तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्त्तते उताहो न ? ॥ किं चातः[2] ॥

यद्यनुवर्त्तते षत्वमपि प्राप्नोति । अथ निवृत्त–'द्विस्त्रिश्चतुरिति कृत्वोर्थे' 'इसुसोः सामर्थ्ये' 'नित्यं समासेऽनुत्तरपदस्थस्ये'ति षकारग्रहणं कर्त्तव्यम् ॥

तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्त्तते उताहो न ? ॥

प्र.] विधीयते तदा सोपदादा'वित्यस्यैव सस्य सोपस्कादौ षत्वं स्यात् । वक्ष्यमाणयोगेन विधीयमानस्य तु सस्य षत्वेऽसिद्धत्वात् षत्वं न प्राप्नोतीत्यर्थः । असमासेऽपिग्रहणमिति । अन्तरेणाऽप्यसमासेऽपिग्रहणं विशेषानुपादानात्समासाऽसमासयोर्णत्वं सिध्यति । न च समासे पूर्वपदात्संज्ञायामग'इति नियमेन णत्वस्याऽप्राप्तिः । नियमे कर्तव्ये 'उपसर्गा'दित्यस्य णत्वस्याऽसिद्धत्वान्नियमाऽभावात् । तदेतदसमासेऽपिग्रहणं यथोक्तमर्थं ज्ञापयति । यद्यपि स्थानिभेद आदेश

उ.] मनुवर्तत इति भाव । इण सः इत्यनेनेति । अत्र पक्षे उत्तरत्र सत्वम् 'कुप्वो'रित्य विकृतस्य सो विधीयते । अनेन तु तस्यैव विसर्जनीयस्येत्यनुवृत्त्या विसर्जनीयस्थानिकस्य सत्वेन उत्तरस्य षत्वं क्रियते । तत्र 'विसर्जनीयस्थानिक'इति विशेषणात्पुनःपुनरित्यादौ न दोषः तत्र हि सस्थानिकं स तदुक्त भावः । उत्तरत्र विसर्जनीयपदस्य मण्डूकानुवृत्तिश्च न । अनव्ययस्येति चात्र पक्षेऽत्र न सम्बध्यते । तेन द्विष्कृतमित्यादौ न दोषः । 'काम्ये रो'रित्यपि न सम्बध्यते तेन दुरो दुष्काम्यतीत्यादौ षत्वसिद्धिः । गीः काम्यतीत्यादौ तु सकाराऽभावादेव न दोषः । अपदादाविति चाऽत्र न सम्बध्यते । तेन दुष्कृतीनीत्यादौ न दोषः । पक्षान्तरे तु त्रितयमपि सम्बध्यते । तेनोच्चैः कर्ता काम्यति गा करोतीत्यादौ न दोषः । ननु समासे पूर्वपदादिति नियमात्प्राप्नोतीत्यसमासेऽपि इत्युच्यते इत्याशङ्क्य परिहरति–नचेति । भिन्नप्रकारेणाशङ्क्य परिहरति–यद्यपीति । वस्तुतस्तु 'सूत्रे

१ 'षत्वमुच्यते । २ इद 'कचित्' । ३ सकारस्य' । ४ 'इदुपध । ५ 'इत्यादौ ।

किञ्चात· ? ॥ यद्यनुवर्त्तते सत्वमपि प्राप्नोति । अथ निवृत्तम् 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'ति सकारग्रहणं कर्त्तव्यम् ॥

यथेच्छसि तथास्तु । अस्तु तावदविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते ॥ ननु चोक्तं–"निष्कृतं निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात्षत्वं न प्राप्नोती"ति ॥ नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति 'न योगे योगोऽसिद्धः॥ किं तर्हि॥ प्रकरणे प्रकरणमसिद्ध'मिति, यदयमुपसर्गादसमासेऽपि णोपदेशस्येत्यसमासेऽपिग्रहणं करोति ॥ अथ वा पुनरस्तु 'इण उत्तरस्य विसर्जनीयस्य षत्वं विधीयते' ॥ ननु चोक्त–"सत्वमप्यनुवर्त्तते उताहो न । किञ्चातः, यद्यनुवर्त्तते सत्वमपि प्राप्नोती"ति । नैष दोषः । सम्बन्धमनुवर्त्तिष्यते । 'सोऽपदादौ' 'इण षः' । 'नमस्पुरसोर्गत्योः' सकारः, इण उत्तरस्य षकारः । 'इदुदुपधस्य चाऽप्रत्ययस्य' षकारः । 'नमस्पुरसोर्गत्योः' सकारः । 'तिरसोऽन्यतरस्याम्' सकारः । 'इदुदुपधस्य चाप्रत्ययस्य' षकारः । 'द्विस्त्रिश्चतुरिति कृत्वोऽर्थे' 'इसुसोः सामर्थ्ये' 'नित्यं समासेऽनुत्तरपदस्थस्ये'ति, षकारः । 'तिरसोऽन्यतरस्याम्' सकारः । 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' । सकारोऽनुवर्त्तते । षकारग्रहणं निवृत्तम् ॥ [ इणः षः ]

## इदुदुपधस्य चाऽप्रत्ययस्य ।८।३।४१।

॥ * ॥ इदुदुपधस्य चाप्रत्ययस्येति चेत्पुम्मुहुसोः प्रतिषेधः ॥ * ॥

---

प्र.] भेदश्च, सस्य विसर्जनीयस्थानिकात्पस्य सकारस्थानिकात्तथापि कुप्वोरधिकारादेकनिमित्तषादेशप्रकरणत्वात्समाय । सम्बन्धमिति । नचैवं परस्य सकारः प्राप्नोति, षकारेण तस्य बाधनादकाराऽकरणाच्च । तत्र 'स' इति 'ष' इति च स्वरितत्वादुत्तरत्रानुवर्त्तते । उत्तरेऽपि योगाः स्वरितत्वप्रतिज्ञानाद्योगान्तरेषु केचित्षकारसम्बद्धाः केचित्सकारसम्बद्धा अनुवर्त्स्यन्ते इति यथेष्टं सकारषकारादेशप्रवृत्तिः । [ इणः ष. ]॥

---

उ.] सूत्रमसिद्ध'मिति पक्षेऽपि न दोष , परेषामसिद्धत्वे सोपदादाविति सत्व एवाऽस्य प्रवृत्ति स्यात् । तथा चाऽपदादौ विसर्गस्यैव षत्वविधानेन सिद्धे सस्य विभक्तिविपरिणामेन स्थानित्वकल्पनस्य वैयर्थ्यं स्यादिति। 'तस्मात्सर्वार्थादुत्तरेषामसिद्धत्वाऽभाव'इति भाष्यन्तु एकदेश्युक्तिः, अतएवाऽस्य शास्त्रस्याऽग्रे दूषितत्वेऽपि न दोष । यद्वैतद्दोषाद्य पक्षोऽसङ्गत एवेति तात्पर्यम् । नचैवं इत्यादि । 'इदुदुपधस्येत्यादियोगे रिति दोष । [ इणः [illegible] ]

---

१ इदं क्वचिन्न' । २ 'वर्त्तयिष्यते' । ३ 'इदुपध' ।

लुप्यतेऽत्र प्रत्ययविसर्जनीयो 'रान्सस्ये'ति ॥ एवं तर्हि—॥*॥ भ्रातुष्पुत्रग्रहणं[1] ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य ॥ * ॥ यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यो नैकादेशनिमित्तात्षत्वं भवतीति ॥

## द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।३।१।४३।

द्विस्त्रिश्चतुर्ग्रहणं किमर्थम् ? ॥ इह मा भूत्—पञ्चकृत्वः करोति ॥ अथ कृत्वोऽर्थग्रहणं किमर्थम् ? ॥ इह मा भूत्—चतुष्कपालः चतुष्कण्टक इति ॥ नैतदस्ति । अनेनैव[1] विभाषा, पूर्वेण नित्यो विधिर्भविष्यति ॥ नाप्राप्ते पूर्वेणेयं विभाषाऽऽरभ्यते, सा यथैवेह बाधिका भवति चतुः करोति चतुष्करोति तथैव चतुष्कपालेऽपि बाधिका स्यात् ॥ नाऽत्र पूर्वेण षत्वं प्राप्नोति ॥ किं कारणम् ? ॥ 'अप्रत्ययविसर्जनीयस्ये'त्युच्यते प्रत्ययविसर्जनीयश्चाऽयम् ॥ लुप्यतेऽत्र प्रत्ययविसर्जनीयो रान्सस्येति ॥ तस्मात्कृत्वोऽर्थग्रहणं कर्तव्यम् ॥

प्र ] यत्तु स्थान इति रपरत्वाऽभावात्सकारस्यैव रुत्वविसर्जनीयौ मन्यते । लुप्यत इति । पूर्वोक्तेन न्यायेन रपरत्वं भवत्येव । कस्कादिष्विति । एकादेशमात्रं निमित्तं यस्य तस्मात्परस्य विसर्जनीयस्य षत्वं न भवतीति ज्ञाप्यते ॥

द्विस्त्रिश्चतुरिति कृत्वोऽर्थे । द्विस्त्रिश्चतुर्ग्रहणमिति । वक्ष्यमाणेनाऽभिप्रायेण त्वयाऽयं प्रश्नः । इतरस्त्वगृहीताऽभिप्रायः प्रत्युदाहरति—पञ्चकृत्व इति । अत्र सकारः प्रसज्येत । अथेति । द्विस्त्रिः शब्दौ कृत्वोऽर्थावेवेति प्रश्नः । इतरश्चतुःशब्दार्थमेतद्विशेषणमित्याह—चतुष्कपाल इति 'इदुदुपधस्ये'ति नित्यं षत्वं भवति अप्युपधत्वादुणादीनामप्रत्ययविसर्जनीयत्वात् । यदा तु साहचर्यं व्यवस्थाहेतुत्वेनाश्रीयते तदा चतुःशब्दार्थमपि कृत्वोऽर्थग्रहणं न कर्तव्यम् । प्रत्ययविसर्जनीय इति । सकारस्य रुत्वे कृते पूर्वस्य 'रो री'ति लोपः क्रियत इति

उ ] द्वुणष्पर इत्यत्र भाष्यप्रदीपोद्द्योते निरूपित तत्त्वबोधार्थम् । लुप्यतेऽत्र प्रत्ययविसर्जनीय इति । योऽत्र प्रत्ययस्थानिकस्तत्र तथाऽभिमतो विसर्जनीयः स लुप्यते—न इत्यत्र स्थानिनः प्रत्ययस्यैव लोपादिति भावः । ज्ञाप्यत इति । एवञ्च विधानसामर्थ्यात्तत्त्वादिप्रवृत्तिरनेन ज्ञाप्यते । तेनाऽमी क्षीरपेणेत्यादौ णत्वमेव सिद्ध्यत इति भावः ।

द्विस्त्रिश्चतु । वक्ष्यमाणेनेति । 'इदुदुपधस्ये'त्यनुवृत्तिरूपेणेत्यर्थः । दूषणायेति । तद्ग्रहणवैयर्थ्यप्रतिपादनायेत्यर्थः । सकार इति । षत्वयोरुभयेरप्यनुवर्तनेन ण परस्य षोऽन्यस्य स इति व्याख्यानादिति भावः । न कर्तव्यमिति । एवञ्च तद्

१ 'अनेनैव' पाठः । २ इदं नास्ति । ३ 'तस्मात्कृत्वोऽर्थग्रहणेन' पाठः ।

द्विस्त्रिश्चतुर्ग्रहण शक्यमवक्तुम् ॥ कस्मान्न भवति पञ्चकृत्व करोतीति?। 'इदुदुपधस्ये'ति वर्त्तते। नैव शक्यम्, अक्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे कृत्वार्थग्रहणेन विसर्जनीयो विशेष्येत ॥ तत्र को दोष ? ॥ इहैव स्याद्द्विष्करोति द्वि करोति[1], त्रिष्करोति त्रि करोति[3] [ इति ]। इह न स्याच्चतु[2] करोति चतुष्करोतीति। द्विस्त्रिश्चतुर्ग्रहणे पुन क्रियमाणे कृत्वोर्थग्रहणेन द्विस्त्रिश्चतुरो विशेष्यन्ते 'द्विस्त्रिश्चतुर्णा[4] कृत्वोर्थे वर्त्तमानाना यो विसर्जनीय' इति ॥ एतदपि नास्ति प्रयोजन, 'पदस्ये'ति वर्त्तते। तत्कृत्वोर्थग्रहणेन विशेषयिष्याम –'पदस्य कृत्वोऽर्थे वर्त्तमानस्य यो विसर्जनीय' इति ॥

॥ * ॥ कृत्वसुचर्थे[5] एव ब्रवीति कस्माच्चतुष्कपाले[6] मा[7]।
एव विभाषयाऽभूत्तु सिद्ध तत्र पूर्वेण ॥ १ ॥
सिद्धे व्यय नियत्त चतुर एव यदापि कृत्वोर्थे।
इह कृत्वाऽर्थीये रेफस्य विसर्जनीयो हि ॥ २ ॥

प्र ] भाव । लुप्यत इति। 'रात्सस्ये'ति लोपे कर्तव्ये रुत्वस्याऽसिद्धत्वात्। रोरीति लोपे च 'ढ्लोपे' इति दीर्घप्रसङ्ग । द्विस्त्रिश्चतुर इति। चतु शब्द सुबन्तस्यानुकरणमिति प्रकृतावेवाऽदृष्टत्वादाम्न कृत । 'द्विस्त्रिश्चतुर्णा'मित्यत्र त्वसुबन्तानुकरणत्वान्नुट् कृत । पदस्य कृत्वोर्थ इति। ननु 'पूर्वत्रासिद्ध'मिति विकल्पस्याऽसिद्धत्वाच्चतुष्करोतीति नित्य षत्वप्रसङ्ग । नैष दोष । 'प्रकरणे प्रकरणमसिद्ध

उ ] नित्यत्वज्ञापनार्थमिदमित्यर्थ । परत्वाद्रुत्व स्यादत आह–असिद्धत्वादिति। रुत्वे दोष स्यादाह–रोरीतीति। प्रकृतिवदनुकरण मिति न्यायेनाऽऽम् स्यादत आह–चतु शब्द इति। अतिदेशाऽनित्यत्वादभ्युपेत्येऽपि सुपो लुक्। एव च तत एवाऽऽम्वारणे सुकरमित्यपि बोध्यम्। नुट् कृत इति। नुट्करणाद्वाऽऽनुनासिक्यानुकरणमनुमीयत इत्यर्थ.। इदुदुपधस्य कृत्वोर्थेति। द्विस्त्रि शब्दयोरप्रयतस्येति निषेधेन इकारग्रहण चिन्त्यम्। उदुपधस्ये त्येव युक्त पाठ । भाष्ये उक्तार्थसङ्ग्राहकौ श्लोकौ–कृत्वसुजर्थे इति। कस्मादिति। किमर्थं कृत्वसुजर्थ इत्युच्यते इत्यर्थ । उत्तरयति–चतुष्कपाले मेति। एव विभाषया माभूदित्यन्वय । इतर आह–ननु सिद्ध पूर्वेणेति। आरम्भवाद्याह–सिद्धे व्ययमिति। तथा चाऽसति कृत्वोर्थग्रहणेऽसुजन्तस्यापि विभाषा स्यादित्यर्थं । यदापीति। यदा तु अयमाचार्य कृत्वोऽर्थे इति करोति तदा न दोष इत्यर्थं । ननु

१ विशेष्यते पा० २ अत्र पूर्वपरयोरुदाहरणयोर्व्यत्यय । ३ अय पाठ क्वाचित्क ४ द्विस्त्रिचतु पा० । ५ श्लोकवार्तिकानि। ६ 'न पा० । ७ कपाले इति ।

एवं सति विदानीं द्विविधतुरित्यनेन किं कार्यम् ? ।
अन्यो हि नेदुदुपधः कृत्वोर्थे कश्चिदप्यस्ति ॥ ३ ॥
अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि ॥ ४ ॥
तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति ।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ॥ ५ ॥ * ॥

**नित्यं समासेऽनुत्तरपदस्थस्य ।८।३।४५।**

अनुत्तरपदस्थस्येति किमर्थम् ? ॥ परमसर्पिष्कुण्डिका ॥ अथेदानीमनेन मुक्ते पूर्वेण षत्वं विभाषा कस्मान्न भवति–'इसुसोः सामर्थ्ये' इति ? ॥

॥ * ॥ नाना पदार्थयोर्वर्तमानयोः ख्यायते यदा योगः ।
तस्मिन् षत्वं कार्यं तदुक्तं तच्च मे नेह ॥ १ ॥ * ॥

प्र.] न तु योगे' इत्युक्तत्वात् । अथ वा इदुदुपधस्य कृत्वोर्थवृत्तेनोऽप्राप्ते नित्ये षत्वेऽस्यारम्भादस्याऽपवादत्वमित्यपवादो वचनप्रामाण्याद्वाऽसिद्धो भवति ।

**नित्यं समासे ।** **अथेदानीमिति ।** इह समासग्रहणादेकार्थीभाव एव सामर्थ्यं गृह्यते । पूर्वसूत्रे तु विशेषाश्रयणे प्रमाणाऽभावाद्विविधसामर्थ्यग्रहणस्य न्याय्यत्वादेतद्विधीयमाननित्यषत्वाभावे पूर्वेण विकल्पः प्राप्नोत्येव । **नानापदार्थयोरिति ।** नानाभूतयोः पदार्थयोर्यौ शब्दौ वर्तेते तयोर्यो योगो व्यपेक्षालक्षणः स ख्यायते ज्ञायते न त्वेकार्थीभावो गृह्यते । **तस्मिन्निति ।** व्यपेक्षालक्षणे सम्बन्ध इत्यर्थः । **तदुक्तमिति ।** व्यपेक्षालक्षणं सामर्थ्यमाश्रयितुं युक्तं, लक्ष्यानुरोधात् । अथ वा पदविधित्वात्समर्थपरिभाषोपस्थानात्सामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणाद्विशिष्टसामर्थ्यपरिग्रहः । **तच्चेति ।** व्यपेक्षालक्षणसामर्थ्यमिह परमसर्पि-

वि.] प्रत्ययविसर्गत्वा पूर्वेण न प्राप्नोत्यत आह–**लुप्ते इति ।** एवञ्च प्रत्ययलक्षणत्वात् प्रत्ययविसर्गोऽयमिति भावः । **एवं सतीति ।** कृत्वोऽर्थग्रहणे सत्यर्थः । **तदा रेफस्येति ।** स च न कृत्वोऽर्थ इति भावः । आरम्भवादाह–**तस्मिंस्त्विति ।** प्रत्याख्यानवादाह **प्रकृतं पदमिति । तदन्तमिति ।** विसर्जनीयान्तमित्यर्थः ॥

**नित्यं समासे ।** ननु पूर्वत्र व्यपेक्षालक्षणसामर्थ्याश्रयणात् कथं समासे तस्य प्राप्तिरत आह—**इहेति । अथवा पदविधित्वादिति ।** इदं चिन्त्यम्, तद्विध्युद्देश्ययोरतद्विध्युद्देश्यविधेययोर्वा यत्रैकार्थीभावयोग्यता तत्रैव तत्प्रवृत्तिः, नचैवं प्रकृते पदकदर्थीभावो

1 'स्तथा' पा० । 2 'त्या' । 3 'तयोर्योग' ।

व्यपेक्षासामर्थ्ये पूर्वयोगो[1] न चाऽत्र व्यपेक्षासामर्थ्यम् ॥

किं पुनः कारणं [ पूर्वस्मिन्योगे[2] ] व्यपेक्षासामर्थ्यमाश्रीयते न पुनरेकार्थीभावो, यथाऽन्यत्र ? ॥

॥ * ॥ ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ॥ * ॥

ऐकार्थ्ये सामर्थ्ये सति वाक्ये षत्वं न स्यात्—सर्पिष्करोति, सर्पिः करोतीति ॥

॥ * ॥ तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥

अथ चेत्कृदन्तमेतत्तनोऽधिकेनैव मे भवेत्प्राप्तिः ॥ * ॥

यदि कृदन्तमेतत्ततोऽधिकस्य षत्वं न प्राप्नोति ॥ किं कारणम् ? ॥ 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति ॥ वाक्येऽपि तर्हि न प्राप्नोति परमसर्पिष्करोति परमसर्पिः करोतीति ॥

प्र ]कुण्डिकेत्यादौ नास्तीति षत्वाऽभावः । यथान्यत्रेति । समासतद्धितसुबन्तधातुपु यथैकार्थीभाव आश्रीयते तथेह कस्मान्नाश्रीयत इत्यर्थः । ऐकार्थ्ये इति । यद्येकार्थीभावलक्षणं सामर्थ्यं पूर्वत्राश्रीयेत तदा वाक्ये षत्वविकल्पो न स्यात् । ननु केवलमैकार्थ्यं पूर्वत्र मा ग्राहि, द्विविधस्यतु सामर्थ्यस्य ग्रहणं कस्मान्न भवति । उत्तमनोत्तरम् । अथ वेह समासग्रहणाद्गोबलीवर्दन्यायात्पूर्वत्रापेक्षितप्रवृत्तिनिमित्तविशेषः समर्थशब्द आश्रीयते,—सम्प्रेक्षितार्थं समर्थमिति । अथ चेदिति । स्यादेतत् । द्विविधस्यापि सामर्थ्यस्य पूर्वत्र ग्रहणे कृत्प्रत्यययोरिसुसोर्ग्रहणात्प्रत्ययग्रहणपरिभाषया परममपि कुण्डिकेत्यादौ पाक्षिकः षत्वं न भविष्यतीति । तदयुक्तम् । परममर्पिष्करोतीत्यादावपि षत्वाऽप्रसङ्गात् । वाक्ये चेति । अनु

उ.] दर्शयता । न च एतौ तद्योग्याविति अयपक्ष एव श्रेयान् । परममपि कुण्डिके ति षष्ठी तत्पुरुषः । उत्तर—लक्ष्यानुसारेण । प्रवृत्तिनिमित्तविशेषं दर्शयति—सम्प्रेक्षितार्थमिति । पृथगुपस्थितस्ते पृथक् शक्तिग्रहविषयत्वे वा सति परस्परमाकाङ्क्षार्थमित्यर्थः । अथ चेदित्यादि श्लोकार्थं व्याचष्टे—स्यादेतदिति । सर्पिरादिशब्दा अव्युत्पन्ना अतएव 'सर्पिष स्यादौ ष त्वमिद्धिरिति मात्र । अत्र पक्षे प्रत्ययविसर्गत्वान्न नित्यषत्वप्राप्तिः । प्रत्ययरूपो विसर्गः इत्ययस्त्वेतद्भाष्यविरुद्धः । अतएव 'कृतिभिः कृत'मित्यादौ न षत्वं । तस्मात्प्रत्ययपदस्य तदवयवलक्षणया प्रत्ययावयवविसर्गस्येत्यर्थ एव न्याय्य इति बोध्यम् । न चेत्तुल्यन्त्या तदन्तविधौ तेन पदविशेषणे तदन्तान्तेत्यर्थात् परममर्पिष्कुण्डिक'त्यत्र षत्वं स्यादेवेति वाच्यम् । उपात्तविशेष्यसम्भवे आक्षिप्तेनानन्वयेन तदर्थस्य दुर्लभत्वात् । आक्षेपे मानाऽभावाच्चेत्याशय । 'वाक्यऽपि तर्हीत्यादि भाष्यं व्याचष्टे—तद्युक्तं परमेति । अनुत्तर

1 पूर्वयोगे ' इत्यदः आधिकम् । 2 व्यपेक्षासामर्थ्यं पा० । 4 नास्ति क्वचित्र । 5 भविष्यति' ।

अथ चे कृदन्तमेतत्ततोऽविशेषेण मे भवेत्प्राप्तिः ।
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥ ३ ॥
अथ चेन्माविज्ञानं नियमे च वे ततो विभाषेयम् ।
सिद्ध च मे समासे प्रतिषेधार्थस्तु यत्नोऽयम् ॥ ४ ॥*॥

अपदान्तस्य मूर्द्धन्यः ।८।३।५५।

अथ मूर्द्धन्यग्रहणं किमर्थं नाऽपदान्तस्य षो भवतीत्येवोच्येत, तत्रा यमप्यर्थः षकारग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ?॥ 'इण षः' इति ॥ नैवं शक्यम् । अवश्यं मूर्द्धन्यग्रहणं कर्तव्यम्-इहार्थमुत्तरार्थं च ॥ इहार्थं-तावत्-इणः षीध्वलुङ्लिटां धोऽङ्गादि-त्यत्र मूर्द्धन्यग्रहणं न कर्तव्यं भवति । उत्तरार्थम्-'रषाभ्यां नो णः समानपदे' इत्यत्र णकारग्रहणं न कर्तव्यं भवति । तत्रायमप्यर्थः 'पदान्तस्य ने'ति प्रतिषेधो न वक्तव्यो भवति । अपदान्ताभिसम्बद्धं मूर्धन्यग्रहणमनुवर्तते ॥

॥०॥ इति श्रीभगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्येऽष्टमस्याऽध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥०।

---

प्र.] ग्रहणं तु न कर्तव्यम् । 'समासेऽङ्गुत्तरपदस्थस्ये'ति प्रतिषेधार्थं सूत्रं पठितव्यम् । अव्युत्पत्तिपक्षे त्वाश्रीयमाणे 'सर्पिषा' 'यजुषे'त्यादि न सिध्यतीति पञ्चाय व्युत्पत्तिपक्ष एवमुमन्तस्याश्रयणीयः । [ नित्य समासे ] ॥

अपदान्तस्य मूर्द्धन्य । अथेति । मूर्द्धन्यग्रहणं गुर्विति प्रश्न । इणः षीध्व-मिति । इहाऽक्रियमाणे मूर्द्धन्यग्रहणे 'इणः षाध्व'मित्यत्र टग्रहणं कर्तव्यं, ततः 'समासेऽङ्गुले'रित्यत्र षग्रहणं कर्तव्यम् । अपदान्ताभिसम्बद्धमिति । रषाभ्यामित्य-

---

उ.] एव च नित्यग्रहणमपि कार्यमिति भाव । परेत्वथ चेत्सर्वविज्ञानमिति पाणिने पक्ष., सर्पिषादौ बहुलग्रहणात्कचिदन्यदेवत्यर्थवत्वात्तत्सिद्धम् । ध्वनितं चायमेवेति सूत्रे 'प्रातिपदिकविज्ञानाच्च भगवत सिद्ध'मिति वचनादस्य पाणिनेरक्षन्तव्यमित्याहुः ॥

अपदान्तस्य । ननु पदेन पदान्तप्रत्याख्यानमसङ्गतम् आह-मूर्द्धन्येति । मूर्धन्यग्रहणेऽपि ग्रहणमिति भाष्यार्थं स्याद्-ठग्रहणं कर्तव्यमिति । 'रषग्रहणमिन्दव वक्तव्ये मूर्द्धन्यग्रहणमन्वाह-तत समासे इति । ठग्रहणेन विच्छिन्नतयाऽनुवृत्त्ययोगादिति भाव । भाष्य-अत्र णकारेति । न चैव इत्वदभाष्यमूर्द्धन्यग्रहणभ्यस्यागपार्थविशेषाभावा दिणयाद्यक्षादौ पूर्वमुणाऽमढीव इत्यस्य 'तत्र दोष'इत्यनेन निषेधे स्यान्निबद्धत्वेन इत्वात्

---

१ तत्रायमर्थः' पा०। २ ।०। मूर्धन्यग्रहणमिहार्थमुत्तरार्थं च' ।०। इति वार्त्तिकमत्र दृश्यत इति गोडाः ३ 'तत्रायमर्थः -अपदान्तस्येति प्रतिषेधो वक्तव्यो न वक्तव्यो' पा० । ४ 'चेते इति'।

## सहेः साडः सः ।८।३।५६।

'स'ग्रहणं किमर्थं न 'सहेस्साडो मूर्धन्यो भवती'त्येवोच्येत ? ॥ 'सहेस्साडो मूर्धन्यो भवती' त्युच्यमानेऽन्त्यस्य प्रसज्येत॥ ननु चाऽन्त्यस्य मूर्धन्ये वचने प्रयोजनं नास्तीति कृत्वा सकारस्य भविष्यति॥ कुतो नु खल्वेतदनन्त्यार्थे आरम्भे सकारस्य भविष्यति न पुनराकारस्य स्यात् ? ॥ 'स्थानेन्तरतमो भवती'ति सकारस्य भविष्यति ॥ भवेत्प्रकृतितोऽन्तरतमनिर्वृत्तौ सत्या सिद्धं स्यात्। आदेशतस्त्वन्तरतमनिर्वृत्तौ सत्यामाकारस्य प्रसज्येत। तस्मात् सकारग्रहणं कर्तव्यम् । [॥*॥ सकारग्रहणमुत्तरार्थम् ॥*॥] उत्तरार्थं च सकारग्रहण

प्र ] नापदान्तग्रहणानुवर्तनादपदान्तस्येति सूत्रं न वक्तव्यं भवतीति लाघवं सम्पद्यते ॥

ॐ इति कैयटीये महाभाष्यप्रदीपेऽष्टमस्य तृतीये प्रथममाह्निकम् ॐ

सहे साड स । प्रयोजनं नास्तीति । ननु भिन्नरूपमूर्धन्यार्थं वचनं स्यात् । नैतदस्ति । 'स्थानेऽन्तरतम' इत्यस्य बाधप्रसङ्गात्पदान्तस्येत्यधिकारा दन्त्यस्य न भविष्यतीत्ययमप्यत्र परिहारोऽस्ति । कुतो नु खल्वेतदिति । ननु वचनसामर्थ्यादनुसंहारे बाधिते सर्वादेशो मूर्धन्यः प्राप्नोति । अयमपरोऽस्य दोषोऽस्तु । स्थानेन्तरतम इति । षग्रहणमिहानुवर्तत इति भाव । मूर्धन्यग्रहणानुवृत्तौ तु ऋकार आकारस्य प्राप्नोति । भवेदिति । यथान्तरतम इति सप्तम्याश्रयेण तदाय परिहार । षग्रहणानुवृत्तौ स्यात्। सप्तमीपक्षस्तु दोषदर्शनार्थ उक्त । सप्तम्या हीको यणचीति यणोऽर्धमात्रासाकल्यस्य मात्रिक एवान्तरतम

उ ] नापत्ति षग्रहणं तु प्रतिपदोक्तेऽत्रैव न निषेध इति स्थानिवत्त्वाभावात् इत्थं स्यादेवेति भाष्यम्, एतद्भाष्यप्रामाण्येनाऽनित्यतया षत्वादौ प्रतिपदोक्तपरिभाषायाश्चर्येयं परिभाषा थोरप्रवृत्त्याऽश्रते । प्रियाट् इत्यादेरनभिधानस्य स्थाने मूर्ध्ने उक्तत्वाच्च । इति श्रीनागोजी भट्टविरचिते भाष्यप्रदीपोद्योतेऽष्टमस्य तृतीये प्रथममाह्निकम् ॥

सहे सा । भिन्नरूपेति । ऋवर्णादीत्यर्थं । बाधप्रसङ्गादिति । अबाधेनोपपत्तौ बाधस्याऽन्याय्यत्वादिति भाव । भाष्यमुपलक्षणमित्याह—अपदान्तस्येति । भाष्ये 'प्रयोजन'शब्द प्रयोजकनिमित्तपरोऽपि तेन अपदान्तत्वरूप प्रयोजक नास्तीत्यर्थ इति बोध्यम् । अयमपर इति । पूर्वपक्षत्वाद्दोषान्तरमङ्गीकृतो न दोषाद्यत्वर्थं । वस्तुतस्तु अत्रे इण्को' रित्यस्याधिकारादवध्यवधिमतो साजात्यस्यौचित्येन मूर्धन्य प्रति वर्णस्यैव स्थानित्व नाऽपदान्तस्येत्यस्याऽत्रापि वर्णपरत्वमेवेति भाष्याशय इत्यन्ये । षग्रहणमिति । 'इण्को'

१ र्धन्यस्य वचने' पा०। २ इद कुतस्त्वदितिगौडा' ।

क्रियते । आदेशप्रत्यययोरसकारस्य यथा स्यादिह मा भूत्,—चित स्तुनम् ॥ अथ सहिग्रहणं किमर्थं न 'साड सो भवती'त्येवोच्येत ? ॥ सहरेव साडरूपं भवति नान्यस्य [भवति]। यद्येव–॥२॥ साड षत्वे समानशब्दप्रतिषेध ॥ * ॥ साड षत्वे समानशब्दानां प्रतिषेधो वक्तव्य । साऽडा दण्ड, साऽडा वृश्चिक इति ॥ २ ॥ अर्थवद्ग्रहणात्सिद्धम् ॥ * ॥ अर्थवत साड्[रूप]शब्दस्य ग्रहणं, न चैषोऽर्थवान् ॥ * ॥ अर्थवद्ग्रहणात् सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेध ॥ * ॥ अर्थवद्ग्रहणात्सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेधो वक्तव्य । सह अडेन साऽड, साऽडस्यापत्य साऽडिरित्यत्र प्राप्नोति ॥ [स तर्हि वक्तव्य ?] ॥ न वक्तव्य । षत्वतुकोरेकादेशस्याऽसिद्धत्वान्नैष साड्शब्द ॥ एवमपि सह ऊढेन सोढ, सोढस्यापत्य साढि,—अत्र प्राप्नोति ॥ तस्मात्सहिग्रहणं कर्तव्यम् ॥ [सहे साड स ]।

इण्को ।८।३।५७।

नुम्विसर्जनीयशर्व्यवायेऽपि ।८।३।५८।

॥ ॥ नुम्विसर्जनीयशर्व्यवाये निंसे प्रतिषेध ॥ * ॥ नुम्विसर्जनीयशर्व्यवाये निंसे प्रतिषेधो वक्तव्य । निंस्से निंस्स्वेति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । नुमैव व्यवाये, विसर्जनीयेनैव व्यवाये शरैव व्यवाये इति ॥

प्र] स्थानी स्यात् द्विमात्र । चितमिति । मूर्द्धन्याऽनुवृत्तौ तकारस्य ट प्रसज्येत । षकारानुवृत्तौ तु ष । साड इति । दण्डस्य वृश्चिकस्य वा अङ्गोऽवयवविशेष ।

नुम्विसर्जनीयशर्व्यवायेपि । निंसेरिति । यथा'नृपतेर्न प्रवष्टव्य मिति नृपत्प्रवेशनिषेधपरत्वाद्वाक्यस्य प्रत्येक संहितानां च प्रवेशाऽभाव एव नुमादीनां षत्वाऽप्रतिबन्धहेतुत्वप्रतिपादनायोपादानात्प्रत्येक समुदायेन च व्यवाये षत्वप्रसङ्ग ।

उ] इत्यत इत्यभिमान । षकारानुवृत्ताविति । इदं प्रौढ्या न तु तदनुवृत्तौ मानम् स्त पूर्वोक्तपूर्वपक्षाऽनुसारेण वा । भाष्ये–तद्धितलोप इति । तद्धितनिमित्त लोप इत्यर्थं ।

नुम्विसर्जनीय श। ननु प्रत्येक वाक्यपरिसमाप्तिन्यायानुमानमिति प्रत्येक व्यवाय एतन भाष्य समुदायव्यवायाऽसम्भवाच्च । एवञ्च प्रश्ने न दोष नुम्शब्द्या व्यवायदित्यत आह यथा नृपतैरिति । षत्वप्रसङ्ग इति । षत्वमिति भाव । ननु समुदायेन व्यवायाऽसम्भवात्कन्नन्यायावसरोऽत आह–सर्वैश्चेति । प्रत्येकपरिसमाप्तिन्यायाऽभावे तात्पर्यमिति भाव । एतद्वाक्योपादानेति । एत मङ्गादिक

१ इद क्वचिन्न । २ रूपे तिक्वचिन्न । ३ इति क्वचिन्न ।

किं वक्तव्यमेतत् ? ॥ न हि कथमनुच्यमान गस्यते ? ॥ प्रत्येक वाक्य परिसमाप्तिर्दृष्टेति । तद्यथा गुणवृद्धिसंज्ञे प्रत्येक भवत ॥ ननु चायमप्यस्ति दृष्टान्त –समुदाये वाक्यपरिसमाप्ति । तद्यथा–'गर्गा शत दण्ड्यन्तामर्थिनश्च राजाना हिरण्येन भवन्ति, न च प्रत्येक दण्डयन्ति' ॥ एव तर्हि– ॥*॥ योगविभागात्सिद्धम् ॥*॥ [योगविभाग[1]ात्सिद्धमेतत्] । योगविभाग करिष्यते । 'नुम्व्यवाये' । ततो,–'विसर्जनीयव्यवाये' । तत 'शर्व्यवाये' ॥ स तर्हि योगविभाग कर्तव्य ? ॥ न कर्तव्य । प्रत्येक व्यवायशब्द परिसमाप्यते ॥

## आदेशप्रत्यययो: ।८।३।५९।

आदेशप्रत्यययो षत्वे सरक प्रतिषेध ॥ * ॥ आदेशप्रत्यययो षत्वे सरके[2] प्रतिषेधो वक्तव्य । कुसर धूमर ॥ अत्यल्पमिदमुच्यते 'सरक' इति ॥*॥ सरकादीनामिति वक्तव्यम् ॥*॥ इहापि यथा स्यात्–वर्स तर्समिति॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" । न वा एतत्स्वेन शक्य विज्ञातुम् 'उणादयोऽव्युत्पन्नानि प्रातिपदिका

प ] नुमेवेति । एवमुच्यमानेऽनेकव्यवाये षत्वाऽप्रसङ्ग । ननु चायमिति । सर्वेष व्यवायाऽसम्भवाद्यथासम्भव क्वचित्प्रत्येक क्वचिद्द्वाभ्या व्यवाय षत्वप्रसङ्ग । एव तर्हीति । योगविभागे सति द्वाभ्या व्यवाये षत्वाऽभाव । 'इण्को'रिति पञ्चमी निर्देशादानन्तर्ये षत्वप्रतिपादनाद्योगत्रयेण चैकैकव्यवाये षत्वाऽभ्यनुज्ञानात् । प्रत्येकमिति । लक्ष्यदर्शनवशाल्लक्षणव्यवस्था ततश्चैतद्वाक्योपायानि प्रक्रिया वाक्यानि त्रीण्युपलक्ष्यन्त इति योगविभागसाध्यफलसिद्धि । [ नुम्विसर्ज ] ।

आदेशप्रत्यययो । कुसर इति । 'अशे सर'न्नित्यत सरन्प्रत्ययो 'कृधूमादिभ्य रि'दित्यत्रानुवर्तते । कित्त्वातिदेशाच्च कित्कार्यगभाद्वाप्यवार्तिकयो सरक्पठित । वर्समिति । 'वृतृवदि'इति सप्रत्यय । उणादय इति । अबुधबोधनाय व्युत्पाद्यमाना अप्युणादयो व्युत्पत्तिनिमित्त कार्य न लभन्ते, 'अत कृकमिकंसे'त्यत्र पृथङ्मग्रहणात् । नवं एतदिति । यत्र व्युत्पत्तिहेतुरुणादीनामवश्याभ्युपेय

उ ] वाक्यमुपायो येषाम् अपाय इति पाठे अपादान वा येषामित्यर्थ । कश्चित्तु 'एतद्वाक्या प्रक्रियावाक्यानी'त्येव पाठ । [ नुम्विसर्जनीय ]।

आदेशप्रत्यययो । सरक उणादिष्वप्रसिद्धत्वादाह–अशेरिति । ननु व्युत्पत्तिमभिधायाव्युत्पन्नत्वकथनमसङ्गतमत आह–अबुधेति । वृश वर्षे सप्रत्यय । षत्वे कर्तव्ये

1 इद लुप्त मिति गौडा । २ सरकाप्रतिषेध' पा० । ३ पादनाय योग । ४ 'यनत्सत्व' ।

